ॐ

रावसाहेब मल्लप्पा वसप्पा वारद यांच्या उदार आश्रयाखालीं प्रसिद्ध होणारी वीरशैव-लिंगिब्राह्मणधर्मग्रंथमाला.

ग्रंथ ३८ वा.

श्रीस्वप्रभानंदनामशिवाचार्यकृत

# शिवाद्वैतमंजरी.



व

श्रीशंभुदेवकृत

## शैवसिद्धान्तदीपिका.


हा ग्रंथ

वेदमूर्ति, मणूर मठाध्यक्ष मल्लिकार्जुनशास्त्री

यांनीं सोलापूर येथें

'श्रीदत्तप्रसाद' छापखान्यांत छापवून प्रसिद्ध केला.

---

आवृत्ति १ ली. प्रती १,०००.

---

शके १८३१, सन १९०९.

---




---

किंमत ७ आणे.

# प्रस्तावना.

ह्या भरतखंडांतील वैदिकमतांत व्यासकृतउत्तरमीमांसासूत्रांवरून स्थापित झालेले—द्वैत, अद्वैत, विशिष्टाद्वैत, शक्तिविशिष्टाद्वैत, पाशुपत असे पांच सिद्धांत आहेत. द्वैतमतावलंबी माध्वलोकांत मणिमंजरी इत्यादि प्रकरणग्रन्थ; अद्वैतमतानुसारी स्मार्त लोकांत, वासुदेवमनन इत्यादि प्रकरणग्रंथ; विशिष्टाद्वैतमताच्या श्रीवैष्णवांत यतींद्रमतदीपिका इत्यादि प्रकरणग्रन्थ छापिले गेले असल्यामुळें त्या त्या मतांच्या जिज्ञासू जनांस स्वमताचें ज्ञान करून घेण्यास सुलभ झालें आहे. परंतु शक्तिविशिष्टाद्वैतमताभिमानी वीरशैव लोकांत आजपर्यंत छापून प्रसिद्ध झालेले क्रियासार[1], माचिदेवमनोविलास[1], लिंगधारणचंद्रिका, अनुभवसूत्र, वेदांतसारवीरशैवचिंतामणि, वीरमाहेश्वराचारप्रशंसा, इत्यादि ग्रन्थांत क्रियासारादि कांहीं मतप्रतिपादक असले तरी ग्रंथविस्तार व काठिण्य ह्यांमुळें ते दुर्बोध आहेत. व बाकीचे वेद, आगम, पुराणें इत्यादि ग्रंथांतून संग्रहित केले असल्यामुळें बहुशः आचारप्रतिपादक आहेत. पाशुपत (शैव) मतबोधक श्रीकण्ठभाष्य हैसूरसरकारनें छापविलें आहे. तथापि त्या मताचे लोक अप्पय्यदीक्षितांच्यामागें विरल झाले असल्यामुळें, हें श्रीकण्ठभाष्यच वीरशैवमतप्रतिपादक भाष्य आहे, असा कांहीं लोकांचा भ्रम झाला आहे. नीलकण्ठशिवाचार्यानें रचिलेलें भाष्य मात्र शक्तिविशिष्टाद्वैतप्रतिपादक वीरशैवसिद्धांत आहे. क्रियासाराच्या १–४ उपदेशांत ह्या नीलकण्ठभाष्याचाच अर्थ कारिकारूपानें संग्रहित केलेला आहे. परंतु तो क्रियासार ग्रंथ भाष्यावांचून नीट समजणें शक्य नाहीं. पूर्वोक्त द्वैतादिमतत्रयप्रतिपादक छापील प्रकरणग्रंथांप्रमाणें आजपर्यंत वीरशैवमतप्रकरणसंबंधीं कोणताहि संस्कृत प्रमुख ग्रंथ देवनागरीं लिपींत छापिला गेला नसल्यामुळें शिवाद्वैतमंजरी हा प्रस्तुत ग्रंथ आह्मी छापून प्रसिद्ध केला आहे.

---

१ हे संस्कृत ग्रन्थ कानडींत छापिलेले आहेत तेहि ह्यामागून देवनागरी लिपींत छापण्याचा आमचा विचार आहे.

ह्या वीरशैवमताशीं पाशुपतमताचा कितीसा भेद आहे हें विद्वानांच्या लक्षांत यावें ह्मणून शैवसिद्धान्तदीपिका नामक पाशुपतमतग्रन्थ ह्यास जोडून छापिला आहे.

आमच्याजवळ शिवाद्वैतमंजरीची एक प्रत श्रीमन्निरंजनजगद्गुरुगंगाधरस्वामी मूरुसाविरमठ हुबळी यांच्या संस्थानाकडून मिळाली होती ती, व पंडित पी. आर करिबंसवशास्त्री ह्मैसूर ह्यांची छापील प्रत ह्या दोन्ही प्रती परस्पर ताडून पाहून हा प्रस्तुत ग्रंथ छापिला आहे. व शैवसिद्धांतदीपिकाहि त्यांचेच सदरील छापील प्रतींतून घेतली आहे.

वे. मल्लिकार्जुनशास्त्री जैनापूर व वे. जगदीशशास्त्री नालवार तसेंच वे. शा. सं. बाळकृष्णशास्त्री पेंढरकर ह्यांनीं मूळ ग्रंथ व प्रूफ तपासण्याचें काम फार श्रमपूर्वक केलें, याबद्दल ह्या त्रिवर्गाचें आह्मी फार आभारी आहों.

प्रसिद्धिकर्ता.

---

## विनंति.

निजगुणाराध्यकृत १ अनुभवसार, २ परमार्थगीता, ३ परमार्थप्रकाशिका, ४ कैवल्यपद्धति, ५ परमानुभवबोध, ६ पुरातनत्रिविडी हे सहा ग्रन्थ; तसेंच बसवेश्वरपुराण; बसवेश्वरवचन; प्रभुदेवपुराण; प्रभुदेववचन; चन्नबसवेश्वरपुराण; चन्नबसवेश्वरवचन; माचिदेवपुराण; माचिदेववचन; सिद्धरामेश्वरपुराण; सिद्धरामेश्वरवचन; त्याचप्रमाणें प्रमथांचीं पुराणें किंवा वचनें हीं, हल्लीं आह्मीं छापिलेल्या निजगुणराध्यकृत विवेकचिंतामणीप्रमाणेंच छापण्याची आमची इच्छा आहे. करितां हे मराठी ओवीबद्ध ग्रन्थ; तसेंच उपयुक्त अशा वीरशैवलिंगिब्राह्मणांच्या संस्कृत धर्मग्रन्थांपैकीं कोणत्याहि पूर्ण अगर अपूर्ण ग्रन्थाच्या हस्तलिखित प्रती कोणाच्या संग्रहीं असल्यास त्यांनीं त्या आह्मांकडे अगर रावसाहेब मल्लप्पा बसप्पा वारद सोलापूर ह्यांजकडे, आपली मूलप्रत छापून झाल्यानंतर आपणांस परत मिळण्याची इच्छेनुसार योग्य खात्री पटवून घेऊन, पाठविण्याची मेहेरबानी करावी; ह्मणजे त्यांसहि धर्मोन्नतीच्या कामीं हातभार लाविल्याचें श्रेय मिळेल. अशा रीतीनें मूलप्रत पाठविणारांकडे त्यांच्या मूलप्रतीसह दोन छापील प्रती पाठविण्यांत येतील.

प्रसिद्धिकर्ता.

# शिवाद्वैतमंजरी विषयानुक्रमणिका.

## शैवसिद्धान्तदीपिकाविषयानुक्रमणिका.

---

## शिवाद्वैतमंजरी शुद्धाशुद्धपत्रिका.

| पृष्ठ. | पंक्ति. | अशुद्ध. | शुद्ध. |
|---|---|---|---|
| ३ | ११ | तंतुयट | तंतुपट |
| ३ | १३ | मृद् | मृद |
| ७ | ८ | युष्म | युष्मत् |
| ८ | १४ | नष्टं | नष्ट |
| ८ | २१ | छिन्न | च्छिन्न |
| ८ | २४ | ” | ” |
| १२ | २५ | क्रत्रिम | कृत्रिम |
| १३ | ६ | कर्तरिति | कर्तरीति |
| १५ | २४ | कृतवात् | कृतत्वात् |
| ३७ | २१ | इकारो | हकारो |

---

## शैवसिद्धान्तदीपिका शुद्धाशुद्धपत्रिका.

| पृष्ठ. | पंक्ति. | अशुद्ध | शुद्ध. |
|---|---|---|---|
| ७ | १६ | तत्वनीति | तत्त्वानीति |

ॐ

# अथ शिवाद्वैतमंजरीप्रारंभः



श्रीगुरुबसवलिंगाय नमः ॥ अथ शिवाद्वैतमंजरीग्रंथो लिख्यते शुभं भूयात् ॥

श्रीनाथं नौमि शांतं त्रिगुममलमहं शिष्यहृद्ध्वांतभानुम् ।
मन्मूर्ध्नि द्वादशांतस्थितसितजलजप्रोद्यदब्जत्रिकोणे ॥
इच्छाज्ञानक्रियाख्ये त्रिविधलिपिलसत्सुत्रिरेखे हळक्षे[1] ।
कृत्स्नार्णोन्मुख्यबिंदौ चिदचिदुदयकृद्दृक्क्रियांघ्रिद्वयाढ्यम् ॥१॥

ब्रह्माद्वैतमनात्मकल्पमितरैराभण्यते तत्पुन-
स्त्वस्तित्वादिविभागतः स्फुटतरं द्वैते सुविश्रास्यति ॥
तद्रीतिं प्रतिपाद्य दूषणगणं चापाद्य सद्दृक्क्रियम् ।
तद्ब्रह्मेत्युपपाद्य विश्वमखिलं तद्रूपमाचक्ष्महे ॥ २ ॥

अतः शिवाद्वैतसुमंजरी स्याद्विश्वस्थितिस्तत्प्रतिपादनेन ॥
युक्ता तदाख्याऽस्य ततस्तनोतु तोषं सदेयं शिवभक्तिभाजाम् ॥३॥

अत्र वैय्यासिकेषु विवर्तवादिनो हि व्याससूत्राभिप्रायमित्थं वर्णयंति ॥ तथाहि ॥ युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तौ सिद्धायां तद्धर्माणामपि सुतरामितरेतरभावानुपपत्तिरित्यतोऽस्मत्प्रत्ययगोचरे विषयिणि चिदात्मके युष्मत्प्रत्ययगोचरस्य विषयस्य तद्धर्माणां चाध्यासस्तद्विपर्ययेण विषयिणस्तद्धर्माणां च विषयेऽध्यासो मिथ्येति भवितुं युक्तं. तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेनात्यंतविविक्तयोर्धर्मधर्मिणोर्मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्याहमिदं ममेदमिति नैसर्गिकोऽयं लोकव्यवहारः, आह कोऽयमध्यासो नामेति उच्यते, स्मृतिरूपः परत्र पूर्वदृष्टावभासः तं केचिदन्यत्रान्याध्यास इति वदंति. केचित्तु यत्र यदध्यासस्ताद्विवेकाग्रहनिबंधनो भ्रम

---

१ मये हक्षळार्णप्रयुक्ते पाठांतरम् ।

इति. अन्येऽपि तु यत्र यदध्यासस्तस्यैव तद्विपरीतधर्मत्वकल्पनामाचक्षते. सर्वथापि तु [1]अन्यस्यान्यधर्मावभासकतां न व्यभिचरति तथा च लोके अनुभवः, शुक्तिका हि रजतवदवभासते एकश्चंद्रस्स द्वितीयवदिति कथं पुनः प्रत्यगात्मन्यविषये अध्यासो विषयतद्धर्माणां सर्वो हि पुरोऽवस्थितविषये विषयांतरमध्यस्यति, [2]युष्मत्प्रत्ययारोपितस्य प्रत्यगात्मनो विषयत्वं ब्रवीषि, उच्यते न तावदयमेकांतेनाविषयः अस्मत्प्रत्ययविषयत्वादपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः ॥ न चायमस्ति नियमः, पुरोवस्थित एव विषये विषयांतरमध्यसितव्यमिति अप्रत्यक्षेऽप्याकाशे बालास्तलमलिनताद्यध्यस्यंति । एवमविरुद्धः प्रत्यगात्मन्यप्यनात्मताध्यासः तमेतमेवं लक्षणमध्यासं पंडिता अविद्येति मन्यंते तद्विवेकेन च वस्तुस्वरूपा च धारणं विद्यामाहुः ॥ तत्रैवं सति यत्र यदध्यासः तत्कृतेन गुणेन दोषेण वाऽणुमात्रेणापि न संबध्यते, तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणीत्यादिना एवमयमनादिरनंतो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्वप्रवर्तनः सर्वलोकप्रत्यक्ष इत्यंतेन ग्रंथेनाध्यासस्वरूपमुपपाद्य प्रत्यक्षादिप्रमाणोपलक्षितनिखिलप्रपंचस्याविद्याविषयत्वं प्रतिपाद्य अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदांता आरभ्यंत इति जडचेतनविभागपूर्वकं प्रतिज्ञाय तत्प्रतिज्ञापूरणायाध्यायचतुष्टयात्मकं शास्त्रं निर्विशेषब्रह्माद्वैतपरत्वेन प्रतिपादितं ॥

अत्रेदं चिंत्यते अविद्यासद्भावे किं मानमिति तत्र प्रत्यक्षमुतानुमानमाहोस्विदागमाः किमांतरीयानुभवो वा उच्यते । तस्या अचाक्षुषत्वेऽपि दृश्यकार्यान्यथानुपपत्त्या "विद्यां चाविद्यां च" इति श्रुतेः अहमज्ञ इत्यनुभवाच्च अनाद्यनिर्वचनीया ब्रह्माश्रिता जीवविषयिणी भावरूपा काचिदविद्याऽस्तीति निश्चीयत इति चेत् [3]तत्प्रमाणस्याविद्यायाश्च भेदो वा यद्यभेदो वा नाद्यः अविद्यातिरेकस्य विद्यात्वेन तत्प्रमाणस्यापि विद्यैकरूपतावश्यंभावेन तन्निसत्यत्वप्रसंगात् ॥ नच तत्प्रमा-

---

१ अन्यधर्मावभासकतामव्यभिचरति । २ युष्मत्प्रत्ययोपेतस्य ।

३ एवंविधप्रमाणं केन सिद्धमित्याकांक्षायां विद्ययेत्यन्योन्याश्रयापत्तेः किं च

णस्याविद्याकार्यत्वेन भेदांगीकारान्न दोष इति वाच्यं। [1]कार्यकारणयोर्भेदे तंतुघटयोरिव भिन्नस्वभावत्वेनाकारणत्वप्रसंगात् [2]अभेदे सत्येकरूपत्वेन कार्यमिति कारणमिति विभागासंभवात् भेदाभेदयोर्विरोधेन अनंगीकारात् तत एव मृद्घटदृष्टान्तस्यापि दूरापास्तत्वात् यदि भेद एवेष्टस्तदा तादात्म्यासंभवात् दंडनाशेऽपि घटस्थितिरिव कारणीभूताविद्यानिवृत्तावपि तत्कार्यरूपप्रपंचनिवृत्तिर्नस्यात् इष्टापत्तौ मुक्तिरेव न स्यात् बन्धस्य प्रपंचान्तर्गतत्वात् नापि द्वितीयः प्रमाणप्रमेययोरभेदादिदं प्रमाणमिदं प्रमेयमिति विभागासंभवात्. यदि स्वसद्-

---

१ कार्यरूपप्रमाणकारणीभूतविषयोर्भेदाभेदाविकल्पासाहिष्णुत्वात्तथा हि ।

२ न च मृद्घटयोरिव संभवतीति वाच्यं तन्तुघटयोरिव मृद्घटयोरात्यन्तिकभेदशून्यत्वात्–तन्तुवन्मुख्यकारणत्वप्रसंगात्–अतो दृष्टांतस्य वैषम्यात् न च तन्तुघटयोरिव मृद्घटयोर्भेदाविशेषेऽप्यन्वयव्यतिरेकाभ्यां घटं प्रति मृद् एव कारणत्वं निश्चीयत इति वाच्यं तादृगन्वयव्यतिरेकासिद्धकार्यकारणभावस्तावन्मृद्घटयोः किं निबन्धन इत्यन्वेषणीयत्वात्. न च विनाभावादिसंबन्ध एव नियामक इति वाच्यं सोपि किं निबन्धन इत्यन्वेषणीयत्वात्. तन्तुघटयोरिव मृद्घटयोरपि भेदविशेषात् तस्मादनन्यगतिकत्वेन मृद्घटयोर्भेदाभेद एव शरणीकरणीयः न च भवतां नेष्ट इति न च भेदाभेदयोर्विरोधात्कथं भेदाभेदस्तयोरंगीकर्तुं शक्यत इति वाच्यं अन्यथानुपपत्तेर्बलीयस्त्वात् मृदेव घटाकारेण भातीति मृद्घटो न संभवतीति परिहर्तुमशक्यत्वात् यदि घटो नास्तीत्यपि वक्तुं न शक्यत्वात् मृदः कुंभो जायत इत्यादिव्यवहारे वर्तमानकालरूढजनिक्रियाया निराश्रयत्वप्रसंगात् जन्मकाले घटाभावात् उत्पत्त्यसंभवत्वात् तस्मान्मृदादिहेतुवस्तुषु कार्यसामरस्यं नास्तीत्यंगीकरणीयत्वेन दण्डघटयोरिवात्यंतिकभेदासंभवेन सामरस्याभेदस्यैवांगीकरणीयत्वात् अन्यथा दंडघटदृष्टान्तेन कारणीभूताविद्यानिवृत्तावपि तत्कार्यनिवृत्तिर्नस्यात् तस्मात्कार्यकारणयोर्भेदाभेदांगीकारेण विना कार्यकारणभावासंभवात् भेदाभेदस्यानभिभवत्वात् उक्तरीत्या विद्यातिरिक्तस्य विद्यात्वेन तत्कार्यताया असंभवाच्च ॥

—( अन्यग्रन्थे लब्धोऽयं विषयः )

भावे स्वयमेव प्रमाणं तदा [1]स्वप्रकाशतापत्तिः आत्मवदन्यनिरपेक्षया भासमानत्वात् न हि कश्चिद्व्यवहरन् स्वसद्भावे प्रमाणमिच्छति यदि साऽपीष्टा तदा विद्यैव स्यात् अविद्येति वार्तैव न स्यात् विद्याऽपि न तत्र प्रमाणं भवितुमर्हति तस्यास्तावन्निरंजनत्वेन चैत्योपरागशून्यत्वात् असावविद्येति स्फुरणासंभवात् तस्मादविद्यासद्भावे मानमन्वेषणीयम् ॥

अथ द्विसत्यत्वप्रसंगादप्यविद्यांगीकारो न संभवति ब्रह्मातिरेकेण काचिदविद्या नास्तीत्यंगीकरणीयत्वात् न चाधिष्ठानगतसत्तैवाविद्यायां तत्कार्ये च प्रतिभातीति नोक्तदोष इति वाच्यं सदसतोः सत्यामविद्यायां सा सत्ता भासते वा यद्यसत्यां वेति विकल्पात् तत्र नाद्यः पूर्वमेव सद्रूपेण स्थितत्वात् पुनः सत्तांतरसंबंधानवेक्षणात् नापि द्वितीयः असतः सत्तासंबंधासंभवात् सदसतोर्विरोधात् नचाविद्या सदसद्विलक्षणेति नोक्तदोष इति वाच्यं तद्रूपेणापि सत्यामसत्यां वेति विकल्पे पूर्वोक्तदोषस्यैवानुवृत्तेः ॥

अथ यथाकथंचिदविद्यांगीकारेऽपि ब्रह्माविद्ययोराश्रयाश्रयिभावो न संभवति तयोस्तेजस्तिमिरयोरिव विरोधात् न चोलूकनेत्रतेजस्यंधकाराक्रांतत्वेन तेजस्तिमिरयोः सर्वत्र विरोधाभावात्तद्वत्संभवतीति वाच्यं ॥ "दिवांधाः प्राणिनः केचिद्रात्रावंधास्तथापरे ॥ केचिद्दिवा तथा रात्रौ प्राणिनस्त्वल्पदृष्टयः" ॥ इति सप्तशत्यां स्मृतत्वेन तस्याल्पदृष्टित्वेन सौरतेजोभिभूतत्वेन वेद्यग्रहणापाटवत्वात् अन्यथा रात्रावपि चंद्रचंद्रिकादिवेद्यदर्शनशून्यत्वेन सदांधः स्यात् तस्य दिवांध इति व्यपदेश एव न स्यात् नापि चंद्रकलंकन्यायेन संभवति ब्रह्मणस्तावन्निरंशत्वेन ऊर्ध्वाधस्तिर्यग्भागभेदशून्यत्वात् यदि तयोरविरोधस्तदाऽविद्यायास्तत्वदर्शनादपि निवृत्तिर्न स्यादविरोधादेव "अविरोधितया कर्म नाविद्यां विनिवर्तते" इत्युक्त्वा ब्रह्मणोऽज्ञत्वप्रसंगश्च अंधकाराक्रांतगृहवत् नाप्यंशतः तस्य निरंशत्वादविद्याकल्पितांशभेदोऽपि न संभवति कल्पनायाः प्रागवस्थानासंभवात् ब्रह्मबाह्यदेशस्यैवाभावात् उक्तरीत्या तत्रैव स्थितेरसंभवात् ॥

---

१ आत्माश्रयदोषापत्तेः इष्टापत्तौ ।

अथानिर्वचनीयत्वमपि न संभवति अनादिभावत्वेन निर्वचनीयत्वात् अनादित्वमपि न संभवति घटादिवत्सांशत्वेन जडत्वेन च स्वतःसिद्धत्वासंभवादंगीकारे स्वप्रकाशतापत्तिः परतःसिद्धत्वे घटादिवत्कार्यत्वेन कारणांतरान्वेषणमुखेनानवस्थाप्रसंगात्. अथ भावरूपत्वमपि न संभवति नञर्थोल्लिखितत्वात्. अथ विश्वोपादानत्वं च न संभवति स्वसत्ताशून्यत्वात जडत्वेन प्रेरकत्वाभावाच्च. चेतनस्य निःसंगत्वेन तदसंभवात् नचायस्कांतदृष्टांतेन चैतन्यसांनिध्यवशादविद्यायाः कारणत्वं संभवतीति वाच्यं, भिन्नदेशस्थितयोरेव सांनिध्यनियमात् तद्दृष्टांतात् तद्ब्रह्मबाह्यदेशाभावात् ब्रह्मण्येव स्थितायास्तु लोहमणिप्रविष्टसूचेरिव निर्व्यापारत्वात् विश्वाकारेण परिणमनक्रियासंभवात्, यदि निराश्रयैव कार्यं जनयेत्, तदा स्वतंत्रतापत्त्या दुर्निवार्या स्यादिष्टापत्तौ मुक्तिरेव न स्यात् ॥

अथ जीवविषयकत्वं च न संभवति तस्यास्तावज्जडत्वेन विषयत्वात् जीवस्य चेतनत्वेन विषयत्वात् अतो वैपरीत्यात्, अंगीकारेऽपि जीवस्याविद्याक्रांतहृदयत्वेन नित्यानित्यवस्तुविवेक एव न स्यात्, नापि गुरुतः शास्त्रतश्च गुरोरप्यविद्याक्रांतहृदयत्वात् शास्त्रस्याविद्याकार्यत्वेन तदेकरूपत्वात्. तस्मादविद्यासद्भावे मानाभावः यथाकथंचिदंगीकारेऽपि द्विसत्यत्वप्रसंगात्, ब्रह्माविद्ययोस्तेजस्तिमिरयोरिव विरोधेन आश्रयाश्रयिभावासंभवात्. अविरोधे निवर्त्यनिवर्तकभावासंभवात्, ब्रह्मणोऽज्ञत्वप्रसंगात् आविद्याया अनादित्वासंभवात् भावरूपत्वासंभवाद्ब्रह्मणस्तत्प्रेरकत्वासंभवात् अत एव विश्वोपादानत्वासंभवाज्जीवविषयकत्वासंभवादंगीकारे तस्य नित्यानित्यवस्तुविवेकासंभवाच्च. अस्यानर्थहेतोः प्रहाणाय "सर्वे वेदांता आरभ्यंत" इत्युक्तमयुक्तमेव ॥ वेदांतानां तदारंभस्य चाविद्यैकरूपत्वेन अविरोधितया तन्निवर्तकत्वासंभवादिति भावः ॥

अथ स्मृतिरूपः परत्रपूर्वदृष्टावभास इत्युक्ताध्यासलक्षणं च न संभवति तथाहि पुरोवर्तिरज्वादिबाह्यवल्मीकादिप्रदेशे संदृष्टभुजंगादिपुरोवर्तिरज्वादावारोप्यत इति दृष्टत्वात्, तथात्र ब्रह्मबाह्यदेशस्याभावात् लोके तत्रैव दृष्टस्य तत्रैवारोपस्य क्वाप्यदर्शनात्. शंखपीतिमाध्यासे पीतिम्नोऽन्यत्र दृष्टत्वात्, अन्यथा शंखः पीत इति न स्फुरेत्. पूर्वं पीताद-

र्शनात् अन्यथा भ्रमप्रमाविवेक एव न स्यात् तत्रैव दृष्टस्य तत्रैवांगीकारादारोपस्य. न चोत्तरक्षणबाध्यमानत्वमेव भ्रमत्वमिति वाच्यं, घटपटयोरिव शुक्तिरजतयोरपि वस्तुत्वेन बाध्यबाधकभावासंभवात् नापि शुक्तिज्ञानेन रजतज्ञानस्य बाधः, घटपटज्ञानयोरिव तयोर्भिन्नकालभिन्नविषयत्वात् अन्यथा घटज्ञानेन पटज्ञानमपि बाध्येत. न च नेदं रजतं शुक्तिरेवेत्यौत्तरकालिकज्ञानं पुरोत्पन्नरजतज्ञानस्य बाधकमित्युच्यत इति वाच्यं ॥ घटज्ञानानंतरं घटं त्यक्त्वा पटं पश्यतः प्रमातुर्नायं घटः पट एवेति निश्चयोऽपि पुरोत्पन्नघटज्ञानस्य बाधकः स्यादिति सर्वस्यापि विकल्पस्य प्रतियोगिनिषेधपूर्वकनिश्चयरूपत्वात्. न च तादृग्विकल्पस्य भिन्नधर्मिकत्वेन विरोधाभावान्न तत्र बाध्यबाधकभावः इह तु एकस्मिन्नेव धर्मिणि इदं रजतं नेदं रजतमिति विरुद्धावभासद्वयस्य प्रामाण्यासंभवादौत्तरकालिकरजताभावज्ञानेन पुरोत्पन्नरजतज्ञानस्य बाधोऽगीक्रियत इति वाच्यं, बाध्यबाधकभावस्य दंडभांडनयेन परस्परान्वयसापेक्षत्वेन तदभावात् तयोर्भिन्नकालीनत्वात्. ननु ज्ञानानां त्रिक्षणावस्थायित्वनियमेन रजताभावज्ञानोत्पत्तिक्षणे विनश्यदवस्थापन्नपुरोत्पन्नरजतज्ञानस्य विद्यमानत्वात्, तयोः परस्परान्वयः संभवति इति चेन्न॥ज्ञानानां गुणत्वेन संयोगेन समवायेन वा तयोः परस्परसमन्वयाभावात् जडत्वेन तादृगौन्मुख्यशून्यत्वाच्च, बाध्यबाधकभावो न संभवत्येवेति. किंतु घटं त्यक्त्वा पटं पश्यतः प्रमातुरिच्छावशात् घटज्ञानस्य निमेषः पटज्ञानस्योन्मेष इति वत् एकस्मिन्नेव धर्मिणि सान्निध्यवशात् नीलपृष्ठत्वादिविशेषं पश्यतः दूरत्वादिनोद्भूतप्राक्तनरजतज्ञानस्य निमेषः नेदं रजतं शुक्तिरेवेत्यौत्तरकालिकज्ञानस्योन्मेष इत्यंगीकरणीयत्वेन तुल्यत्वात्. अथार्थक्रियायोग्यत्वमेव भ्रमत्वमिति चेन्न, गगनकुसुमादिनित्याभावपदार्थस्यापि भ्रांतत्वप्रसंगात् अर्थक्रियायोग्यत्वात् तस्यापि भ्रांतत्वे शुक्तिरजतादिवदिदमिति नेत्रगोचरता स्यात्. गगनकुसुमादेरपि "समर्थः पदविधिरिति" शब्दानुशासनवशादेकार्थीभावलक्षणसामर्थ्यकृतसमासयोगाद्वस्तुत्वमंगीकरणीय एव. योग्यायोग्यतयोः प्रभुसृष्टेर्विचित्रत्वात् स्वातंत्र्यपरिकल्पितशुक्तितरतमभावनिबंधनत्वात् "सत्यं चानृतं च सत्यमभवदिति" श्रुतेः "सदसच्चाहमर्जुनेति" स्मृतेश्च सर्वस्यापि सच्चिन्मुद्रनत्वात् ॥

अथ युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोरित्यत्र तत्कृतजडचेतनविभागोऽपि न संभवति. तथाहि अस्मत्प्रत्ययव्यतिरेकेणानुभूयमानसुखादिवत्तद्गोचरस्य कस्यचिददृश्यत्वात् अस्मत्प्रत्ययस्य मिथ्यात्वात् प्रत्ययस्य सविषयतान्यथानुपपत्त्या अनुमीयते चेदनुमातुरप्यदृश्यत्वात् तस्मात्तदभिमतचैतन्यस्य वंध्यापुत्रप्रायत्वेन अस्मत्प्रत्ययविषयत्वादपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेरित्युक्तेरतितुच्छत्वात्. अथ युष्मप्रत्ययगोचरस्य जडत्वमपि न संभवति. चैत्रमैत्रयोर्विवादे जाते, परस्परतत्प्रयुक्तत्वंकारेण तयोरहंप्रकारकबोधस्यैवोपलब्धेः, चेतनविषयकत्वात्, जडस्येदं प्रत्ययगोचरत्वात् इदं सर्वमसृजत् "इदं शरीरं कौंतेय क्षेत्रमित्यभिधीयते" इत्यादिप्रमाणबलाच्च किं जडस्य त्वंप्रत्ययगोचरत्वे "तत्त्वमसि" इत्युपदेशो जडं प्रत्येव स्यात् तस्मात्त्वमहं प्रत्यययोश्चैतन्यैकविषयकत्वात्, इदमहमिति वक्तव्ये युष्मद्ग्रहणमत्यंतभेदोपलक्षणार्थमिति वदन्नपि प्रत्युक्तः तयोश्चैतन्यैकविषयकत्वेनात्यंताभेदात् "न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः। न चैव न भविष्यामः सर्वे वयमतः परम्।" इति भगवता वयमित्युत्तममध्यमप्रथमाख्यपुरुषत्रयस्याप्यस्मत्प्रत्ययांतर्गतत्वेन क्रोडीकृतत्वाच्च. अत एव त्वमहंप्रत्ययगोचरयोर्विषयविषयिभावोऽपि न संभवति वैजात्याभावात् चैतन्यस्य चैतन्यांतरागोचरत्वात् चैतन्यगोचरघटादिवज्जडत्वप्रसंगात् ॥

न च व्यवसायं प्रत्यनुव्यवसायस्य प्रामाण्यांगीकारान्नायं नियम इति वाच्यं, व्यवसायस्य व्यवसातरि विश्रांतत्वेन ज्ञानस्य घटादिवत् कदापीदमित्यप्रतीयमानत्वेन सदा प्रमेयपदवीमुत्तीर्णत्वात् व्यवसायानुव्यवसाययोर्घटस्यैव विषयत्वात् अनुव्यवसायस्य व्यवसायप्रतिभातघटहृदयंगमीभावरूपत्वात् मया घटोऽयं ज्ञातः इति. अन्यथा घटे घटांतरस्यापि प्रामाण्यमंगीकरणीयं स्यात् यदि घटत्वावच्छिन्नघटस्येदमिति सदा प्रमेयपदनिष्ठत्वेन कदापि तदुत्तीर्णताभावात् घटे घटांतरं न प्रमाणमिति चेदत्रापि तौल्यात् ज्ञानस्य ज्ञातृप्रविश्रांतत्वेन कदापीदमिति प्रमेयपदप्रविष्टत्वाभावादिति तस्मात्सजातीयपदार्थयोर्विषयविषयिभावो न संभवत्येव. अन्यथा प्रमाणमिति प्रमेयमिति व्यवस्थैव न स्यात् प्रमाणरूपप्रमितेरपि प्रमेयतांगीकारात् ।

प्रमितिः प्रमाणमित्यप्यंगीकृतत्वात् एवमात्मनोपि प्रमेयत्वं न संभवति प्रमातृत्वात् अन्यथा तस्यापि प्रमेयत्वे प्रमात्रंतरसापेक्षत्वेनानवस्थाप्रसंगः स्यात्. प्रमेयप्रमात्रोर्भेदघटितत्वात् अत एव त्वमहंप्रत्ययगोचरयोर्विरोधोऽपि न संभवति चैतन्यैकरूपत्वात् तेजस्तिमिरयोरिव विरोधाभावात् यदि त्वंप्रत्ययस्य लक्षणयेदंरूपत्वमेव विवक्षितं. तदापीदंप्रत्ययगोचरस्य जडस्य मयाऽवलोक्यते ममावभासत इत्यात्मप्रकाशारूढतया भासमानत्वान्न तयोर्विरोधः एवं तेजस्तिमिरयोरपि न विरोधः तयोरप्यात्मप्रकाशमवलंब्य भासमानत्वात्, अन्यथा तयोर्विरोध इति स्फूर्तिरेव न स्यात् ॥ "तस्य भासा सर्वमिदं विभाति तमेव भांतमनुभाति सर्वमिति " श्रुतेश्च नापि तयोरितरेतरभावानुपपत्तिः स्मृत्यन्यथानुपपत्त्या प्रमेयस्य प्रमाद्वारा प्रमातृविश्रांतेरंगीकरणीयत्वात्, संस्कारादेव स्मृतिः संभवतीति चेत्, तस्यापि सविषयत्वेनैवात्मविश्रांतत्वात्. न चानुभूतघटस्य नष्टत्वेन सहात्मविश्रांतेरसंभवात् तद्विषयतासाहित्यमात्रेणानुभूतपदार्थविषयिणी स्मृतिः संस्कारात्संभवतीति वाच्यं, विषयताया विषयधर्मत्वेन, तेन विना तत्साहित्यासंभवात्. यदि तयोरैक्योपपत्तिर्न स्यात्तदा घटोऽयमिति न स्फुरेत्, तेजोवाह्यांधकारवत्प्रकाशबाह्यत्वात्. न च तेजोबाह्यघटवत्प्रकाशविषयत्वं संभवतीति वाच्यं ॥ "आत्मन आकाशः संभूत इत्यादिश्रुतेः" ॥ उत्तरोत्तरभूतस्य पूर्वपूर्वभूतकार्यत्वेन मृद्घटन्यायेन परंपरायास्तयोस्तादात्म्यात्. अपि च अंतःकरणावछिन्नत्वे चैतन्यस्यांतःकरणप्रदेशमात्रनिष्ठत्वाद्विषयावछिन्नचैतन्यस्य विषयप्रदेशमात्रनिष्ठत्वादुभयोः संबंधाभावान्नच वृत्तिद्वारा संभवतीति वाच्यं, चैतन्यस्य त्रैविद्यांगाकारेण वृत्तिविषयावछिन्नचैतन्ययोरेकलोलीभावेऽप्यंतःकरणावच्छिन्नशारीरकस्य विषयावच्छिन्नचैतन्येनैकलोलीभावाभावात्तस्य परिणामित्वेनांतःकरणेन सह बहिर्निर्गमनासंभवात्प्रदेशभेदेन चैतन्यभेदाच्छेददर्शनेऽपि ज्ञानस्यात्मगुणत्वेन परकीयगुणद्रव्यैः संयोगेन समवायेन वा संस्पर्शाभावादेव नीलादेर्विषयत्वासंभवाज्ज्ञानस्य विषयित्वासंभवात् ॥

एवं चोक्तरीत्या नित्यानित्यवस्तुविवेकशून्यत्वेन स्वशास्त्रस्य वैय्यर्थ्यप्रसंगात्ताद्दशाधिकार्यभावात्तस्मात्तन्मते जडचेतनविभागश

न्यत्वात् अत एव जीवेश्वरविभागासंभवात् अत एव बंधमोक्षव्यवस्थाया गगनकुसुमायमानत्वात्तदभिमतांतःकरणविशिष्टस्य शारीरकस्याधिकारिणः नित्यानित्यवस्तुविवेकशून्यत्वाद्ब्रह्मणो निर्विशेषत्वेनास्मिन्प्रकाशे नंदामीत्युक्तमांतर्गताकर्मकाक्रमस्वसत्तामुक्तास्फुरणशून्यत्वेन, स्फटिकादिप्रकाशवज्जडत्वात्तत्त्वज्ञानेन प्रपंचस्य बाधांगीकारेण छांदोग्योपदिष्टैकविज्ञानोदितसर्वविज्ञानप्रतिज्ञाभंगप्रसंगात्. अथातो ब्रह्मजिज्ञासा इत्यत्र निर्विशेषब्रह्मण एव जिज्ञास्यत्वेनोद्दिष्टत्वात्, समनंतरसूत्रोक्ततदसाधारणजगज्जन्मादिलक्षणमप्यसंगतं स्यात्, तस्य कर्तृत्वादिशून्यत्वादनुद्दिष्टपदार्थलक्षणकथनस्य शास्त्रकृद्भिरनंगीकृतत्वात्, अत एव शास्त्रयोनित्वादित्याद्युत्तरशास्त्रप्रवृत्तेः कुंठितत्वात्प्रामाणिकैर्विद्वद्भिस्तदुक्तमनादरणीयमिति संक्षेपः ॥

नन्वेवं चेत्कथमद्वैतवादनिर्वाहः विश्वोपादानकारणीभूतमिथ्याप्रत्ययरूपाविद्याया अनंगीकारात्, ब्रह्मणो निर्विकारत्वेन परिणमनासंभवात् विकारित्वादिदोषप्रसंगात्, प्रकाशबाह्योपादानकारणांतरस्यांगीकारो न संभवत्येव. अद्वैतसिद्धांतविरोधादिति चेत् इत्थमालोचनीयं "सन् हृदयप्रकाशो भवनस्य क्रियाया भवति कर्ता सैव क्रियाविमर्शः स्वस्था क्षुभिता च विश्वविस्तारेति" सारस्वतसूत्रस्थित्या हृदयप्रकाशः "हृदयं तद्विजानीयाद्विश्वस्यायतनं महदिति" श्रुतेः चराचरप्रपंचभित्तिभूतात्मप्रकाशः सन् अस्तीत्यंगीकरणीयः। अन्यथा जगदांध्यमापतेतेति स्वसत्ताहानिप्रसंगात् " असन्नेव स भवति असद्ब्रह्मेति वेद चेत् अस्ति ब्रह्मेति चेद्वेद संतमेनं ततो विदुरिति" श्रुतेः तदुपजीव्यत्वात् " अस्यैवानंदस्यान्यानि भूतानि मात्रमुपजीवंतीति " श्रुतेः सहृदयप्रकाश एवास्तीति भवनक्रियाश्रयत्वात्कर्ता भवति. सैव क्रिया स्वस्था चेच्चिदानंदमात्रविश्रांता चेत्, अस्मिन् प्रकाशे नन्दामिति विमर्शः। अन्यथा स्फटिकादिप्रकाशवज्जडत्वप्रसंगात्, क्षुभिता चेत्सृष्ट्युन्मुखा चेत् दृश्यते त्विति ब्रह्मसूत्रस्थित्या गोमयादेर्वृश्चिकाद्युत्पत्तिरिव शिवादिभूम्यंतषट्त्रिंशत्तत्त्वात्मकविचित्रविश्वस्फुरणमयी भवतीति. तथाहि॥" परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" ॥ इति श्रुतिस्थानुक्तार्थप्रकाशकचकारचमत्कारात्, महेश्वरस्वभावभूतपराशक्तेश्चिदानंदेच्छाज्ञानक्रियादिनानारूपतावगमात्. न

च"कामः संकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृति-र्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवेति" श्रुतेः इच्छादीनां मनोधर्मत्वादत एव शारीरकनिष्ठत्वेनानुभूयमानत्वात्कथमात्मस्वभावतेति वाच्यं, नैय्यायिकादिभिरशरीरस्यापि ईश्वरस्य गुणत्वेनेच्छादीनामंगीकृतत्वाद्धटादिभिश्चाविशेषप्रसंगात्. किंच जिज्ञासा बन्धमोक्षाणां सामानाधिकरण्यनियमान्मनसस्तद्विशिष्टस्य वा मुक्तिप्रसंगात्. द्वयोरपि मिथ्यात्वात्. जिज्ञासा बन्धविशिष्टस्य तद्विशेष्यांशे मोक्ष इत्यपि वक्तुं न शक्यते, वैय्यधिकरण्यप्रसंगाद्विशिष्टविशेष्ययोरैक्ये मिथ्यात्वेन मोक्षाक्षमत्वात्. तस्मात्कृत्रिमप्रमातुरिच्छादेर्मनोभिव्यक्ततावप्रतिपादने श्रुतेस्तात्पर्यमित्यंगीकरणीयत्वेन विरोधाभावात् "तस्मिन्कामाः समाहिताः" इति श्रुत्यंतरे सम्यक्पदस्वारस्येनात्मस्वभावतावगमाच्च ॥

एवं स्थिते तत्र चिदानंदयोर्न कदाचिद्विक्षोभः अक्रमस्वभावत्वात्, इच्छादिशक्तीनां सक्रमाक्रमरूपत्वेन विक्षोभभाक्त्वात्. नच सक्रमाक्रमयोर्विरोध इति वाच्यं. वदतो व्याघाताद्भेदाभेदयोर्विरोध इति ज्ञात्वैव वक्तव्यत्वेन तज्ज्ञाने भेदाभेदरूपविषययोर्भासमानत्वात्तस्य सविषयत्वादन्यथा विरोधस्फूर्तिरेव न स्यात्.तस्मात्प्रकाशस्य प्रतियोग्यभावात्किंचान्योन्याभावनिबंधनभेदस्यैवाभेदेन विरोधः। न वयं तादृशभेदं ब्रूमः तस्यासंभवात्तत्रान्यत्वस्य पदार्थस्वभावतानुपपत्तेः पदार्थस्य पदार्थान्यत्वप्रसंगात्. नच पदार्थस्य पदार्थांतरान्यत्वं स्वभाव इति नोक्तदोष इति वाच्यं, तस्य विशेषघटितत्वेनाप्रश्नविषयत्वात्, भेदसामान्यलक्षणप्रविष्टान्यत्वस्यैव प्रश्नविषयत्वात्. किंच घटान्यत्वं पटस्वभावः पटान्यत्वं घटस्वाभव इत्यसाधारणप्रतीतिर्घटपटयोर्भेदे सिद्धे सत्येवोपपद्यत इति तस्याद्याप्यभिलष्यमाणस्वभावत्वात्. नच तंतुमयत्वमृण्मयत्वादिना तयोर्भेदस्य सिद्धत्वादिति वाच्यं घट एव मृण्मयत्वं पट एव तंतुमयत्वमिति निश्चयस्यापि घटपटभेदसिध्द्यनंतरभावित्वात्. किंच तंतुमयत्वमृण्मयत्वयोरपि भेदस्तावत्तदवयवभेदात्तदवयवभेदस्तदवयवभेदादिति परमाणुपर्यंतपर्यालोचनायां निरंशत्वादतींद्रियत्वाच्च. तत्र भेदाग्रहान्मूलक्षयकार्यनवस्थाप्रसंगात्. ॥

नचान्यत्वं भेदनिबंधनः कश्चिदुपाधिः भेदस्य मनोरथायमानत्वेन आत्माश्रयादिदोषप्रसंगात्, किंतु स्वर्णकुंडलन्यायेन विभागो भेद इति

ब्रूमः । तत्र कुंडलं स्वर्णं न भवतीति परिहर्तुमशक्यत्वात्, स्वर्णार्थिनः कुंडले प्रवृत्तिदर्शनात् एवं स्वर्णमपि कदापि कुंडलं न भवति इति परिहर्तुमयुक्तं कुंडलयोग्यत्वात्, कुंडलाकारेण स्वर्णस्यैव भासमानत्वात्. स्वर्णकुंडलं नास्तीत्यपि वक्तुं न शक्यते स्वर्णात्कुंडलं जायत इत्यादिव्यवहारे वर्तमानकालारूढजनिक्रियाया निराश्रयत्वप्रसंगाज्जन्मकाले कुंडलादिवस्तुस्थित्यभावात्, अस्ति चेदुत्पत्त्यसंभवात्स्थितत्वात् . यद्युत्पन्नवस्तुस्थित्यभावेऽप्युत्पद्यमानवस्तुस्थित्यंगीकारे व्यक्ततया स्थित्यसंभवादुक्तदोषात् अव्यक्ततया स्वकारणाभेदेन कुंडलादिवस्तुस्थितेरंगीकरणीयत्वात् ॥

एवं स्थिते विभागनिबंधनभेदस्याभेदेन विरोधाभावात्तस्मादेव विभज्यमानत्वेन तदुपजीव्यत्वात्,चित्रिककौशल्यवशादालेख्यविशेषे गजवृषभयोः प्रतिभास इवाहिकुण्डलमिव ब्रह्मणः स्वतंत्रत्वेन शक्तिशक्तिमद्रूपतया भासमानत्वादत एव तस्य चेतनत्वात्. चेतन इत्यत्र प्रत्ययस्य भावार्थकत्वेन अनभिव्यक्तक्रियारूपधात्वर्थाभिव्यंजकत्वात्, क्रियायाः साश्रयत्वनियमेन तदाश्रयस्य कर्तुरपि तेनैवाक्षिप्तत्वात्, तदंतर्गतक्रियायाः कृतिरूपत्वात् कृतेः सविषयत्वात्, चित्स्वभावत्वेन कृतेः स्वप्रकाशत्वादेवंविधस्वतंत्रप्रकाशताशक्तेः प्रकाशैकरूपत्वात्.अत एव विभागस्य संयोगपूर्वकत्वाद्ब्रह्मणि प्रपंचसंबंधाभावान्निष्प्रपंचत्वाद्वैभासिकभेदो न संभवतीति शंकाकलंकस्यानवकाशात् "नेह नानेति" श्रुतेः प्रापंचिकभेदनिरासपरत्वाद्विमर्शशक्तेः सकलसामरस्यात्मकत्वाद्भेदेन स्थित्यसंभवात्तस्याः समवायसंयोगान्यतरसंबंधसापेक्षत्वाद्गुणगुणित्वाद्यनंगीकारेण समवायस्यासंभवात्, संयोगस्य क्रियापूर्वकत्वादन्यतरोभयकर्मजश्च संयोगस्तावद्भिन्नदेशस्थितयोरेवोपपद्यत इति ब्रह्मबाह्यदेशाभावेन तदसंभवादक्रियापूर्वकसंयोगस्याप्रसिद्धत्वात्

"एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणि च ॥
खं वायुर्ज्योतिरापश्च षड्भिर्विश्वस्य धारिणी" ॥

इति श्रुतेः व्योमादीनां च कार्यकोटिप्रविष्टत्वेन परमाण्वाकाशसंयोगदृष्टांतस्यापि दूरापास्तत्वादनुभयवादिसिद्धत्वात् . सदापरभारवाहकत्वेन स्वातंत्र्यभंगप्रसंगात्, संबंधस्यैकत्वेन द्विनिष्ठतासंभवात् निरंशत्वात्. सांशत्वे द्रव्यत्वापत्त्या संबंधित्वेन तस्यापि संबंधांतरा-

न्वेषणमुखेनानवस्थाप्रसंगाच्च. निष्कलमित्यादिश्रुतेः स्वव्यतिरिक्तप्राकृतहेयकलादिराहित्ये तात्पर्यं. अन्यथा त्वचेतनत्वप्रसंगात् स्फटिकादिप्रकाशवन्निर्विमर्शत्वादिति सूचितत्वात्. तस्माद्ब्रह्मणश्चेतनत्वात् "स वै नैव किमेतस्मादेकाकी न रमते स द्वितीयमैच्छत् स एतावानास तत्सृष्ट्वा तदेवानुप्राविशत्तदनुप्रविश्य सच्चत्यच्चाभवत्" इति श्रुतेः "लोकवत्तु लीलाकैवल्यं" इति ब्रह्मसूत्रस्थितेश्च स्वक्रीडार्थं विश्वभवननिर्माणे स्वातिरिक्तकारणांतरसापेक्षत्वे कुलालादिवत्स्वात्मौन्मुख्यविगलनेनान्यत्रौन्मुख्याददृष्टादिपरतंत्रत्वेन अनीश्वरत्वप्रसंगात् स्वातिरिक्तकारणांतरनैरपेक्ष्येण ईप्सितार्थप्रदचिंतामण्यादिवद्योगी ऊर्णनाभवच्च मयूरांडरसगतपादपक्षादिवर्णवैचित्र्यन्यायेन तादात्म्येन चिद्व्याप्तिरूपत्वेन स्वतंत्रतालक्षणस्पंदनरूपत्वेन चिदुज्वलरूपत्वेन चिदाप्यायनरूपत्वेन चिद्रूपत्वेन च स्वात्मामलमुकुरमंडलतादात्म्यापन्नविमर्शशक्तिक्रोडीकृतव्योमादिपंचप्रमेयविश्वादिचतुरात्मलक्षणजडाजडात्मकं विश्वं स्वेच्छाशक्तिरूपापोहनटंकवशात् शिवादिधरण्यंतषट्त्रिंशत्तत्वात्मना विचित्रीकृत्य सृष्टिस्थितिसंहारबंधमोक्षलक्षणपंचकृत्यमहानाट्यरसिकः सन् क्रीडत इति राद्धांतः इच्छाशक्तेः सविषयत्वाद्विश्वस्यांतस्थितिं विना तदुन्मेषानुपपत्तेः ॥

ननु विश्वस्य ब्रह्माभेदेन सत्तांगीकारेण नित्यत्वात्तदंतर्गतबंधस्यापि तथात्वेन तस्य तत्त्वज्ञानादपि निवृत्त्यसंभवेन मुक्तिर्न स्यात्, मुक्तस्यापि बंधप्रसंगः प्रपंचस्य षड्भावविकारभाक्त्वेन ब्रह्मणस्तदभेदेन नित्यत्वप्रसंगश्चेति चेत्, उच्यते घटो नश्यतीत्यत्र नाशक्रिया न घटनिष्ठा भवितुमर्हति, स्वत एव नाशासंभवात्कालकरणाधीनत्वात्करणानां कर्मेंद्रियसापक्षत्वात्,तेषां ज्ञानेंद्रियसापेक्षत्वात्, तेषामंतरिंद्रियसापेक्षत्वात्, तस्य कृत्रिमप्रमातृसापेक्षत्वात् तस्य देशकालादिपरतंत्रत्वेन स्वातंत्र्येण विना न संभवतीति तस्यास्तन्निरूपितत्वेन तन्निष्ठताया अकामेनाप्यंगीकरणीयत्वेन कर्तृमहेश्वरस्वभावत्वाद्दर्शितदिशा कार्यस्य कुंडलादेः स्वर्णादिकारणात्मना स्थितेरंगीकरणीयत्वेन कार्यस्य कार्यनाशस्य कारणात्मना स्थितिरूपत्वात् न विकारित्वादिदोषप्रसक्तिः दुग्धादौ परिणमनक्रियायाः कालकरणकर्तृसापेक्षत्वेन दृष्टतया कर्तृस्वभावत्वात् गुणदोषयोरपि स्वात्मैकरूपत्वात् किंच

लोके परिणामिवस्तुषु न सर्वत्र सर्वात्मना स्वदोषपरित्यागः स्वर्णादिपरिणामिद्रव्यस्य कुण्डलाकारेण परिणतौ स्वर्णादिरूपतापरित्यागस्यानुभूयमानत्वात् इतोऽपि स्वतंत्रभूतवस्तुपरिणमनस्य कूर्मांगभंगीन्यायेन विकारलेशस्याप्यसंभवात् क्रिया हि कर्मण्येव विश्राम्येन्नतु कर्तरिति न्यायात् नापि मोक्षप्रसंगश्च ॥

"अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ॥
अव्यक्तनिधनान्येव का तत्र परिवेदना ॥ "

इति भगवदुक्तेः भोगापवर्गलक्षणपूर्वापरकोट्योः विश्वस्य चिदानंदैकरसत्वेन स्वस्वरूपतया प्रतिबन्धकत्वाभावात् इच्छादिभूमिप्रविष्टघटादिवदर्थक्रियाशून्यत्वात् मध्यकोटावेव प्रतिबंधकं अर्थक्रियाविशिष्टत्वात् ॥ " मातृमेयमिति साधनात्मिका त्वत्कृतोन्मिषति या विकल्पधीः ॥ तत्स्वरूपमकलंकितं तया तस्य देवि विदुषो न मुक्तता ॥" इति चिद्गगनचंद्रिकायां कालिदासोक्तेश्च ईश्वरेच्छाया एव नियामकत्वान्मुक्तस्य न पुनर्बंधप्रसक्तिरिति न कदाचिदनुपपत्तिरिति शक्तिपातपवित्रितहृदयैर्विद्वद्भिर्विमर्शनीयम् ॥

एवं स्थिते ब्रह्ममीमांसायां भगवता बादरायणेन प्रथमसूत्रे "सदेव सोम्येदमग्र आसीत्" "एकमेवाद्वितीयं ब्रह्म" "तदैक्षत बहुस्यां प्रजायेयेति " श्रुतेः ईक्षदर्शनांकनयोरिति धातुगत्या ईक्षणलक्षणदर्शनस्वभावत्वेन जडविलक्षणतया बृहत्वात् बहुस्यामिति बहुभवनक्रियामर्शनरूपत्वेन दर्शनस्वभावजीवविलक्षणान्यानिरपेक्षणकर्तृतालक्षणानंदपरिबृंहितत्वाच्च."ज्ञानक्रियास्वतंत्रं ब्रह्म जिज्ञास्यत्वेनोद्दिष्टमिति" समनंतरसूत्रोक्तदसाधारणजगज्जन्मादिलक्षणमप्युपपद्यते. तथाहि ॥ अथातो ब्रह्मजिज्ञासा ॥ अत्र " आत्मा वा रे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्य " इति विषयवाक्यं, शास्त्रमनारंभणीयमारंभणीयमिति संदेहः " अतोऽस्मिन् लोके वेदे च प्रथितः पुरुषोत्तम " इति भगवतैव गीतत्वात्. अत्र लोकप्रसिद्धिर्नानुमानेन पामरादीनां व्याप्त्यादिज्ञानशून्यत्वात्. किंत्वहमित्याबालविदितत्वेन वेदेऽपि " अहं ब्रह्मास्मि सत्यं ज्ञानमनंतं ब्रह्म अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाभिः" इत्यादिश्रुतेः महेश्वरस्य प्रसिद्धत्वादसंदिग्धतया वि-

चारविषयाभावात् जीवाश्रिताविद्याया अपि ब्रह्मैकरूपत्वेन निवृत्यसंभवात्, ब्रह्मबाह्यपदार्थांतराभावात्, जन्यानंदावाप्तेरनित्यत्वेन हेयत्वात्, नित्यानंदस्यानवाप्तव्यत्वात् नित्यप्राप्तत्वात् तस्मात्प्रयोजनाभावाच्च शास्त्रमनारंभणीयमिति पूर्वः पक्षः ॥

सत्यं, ब्रह्म तावदुभयत्राप्यहमिति प्रसिद्धमेव तथापीह लोके अवैदिकेषु विवेकिनो विज्ञानवादिनो हि; क्षणिकज्ञानसंतानापेक्षया नित्यः कश्चिद्बुद्धिमान् तद्बुद्धिप्रेरकः कश्चिदीश्वरश्च नास्त्यैवेति वदंति. तयोर्बुद्धिभिन्नत्वे सति बुद्धिबाह्यतया तत्सत्वे मानाभावात्. यदि मानमस्ति तस्य बुद्ध्यंतर्गतत्वेन घटादिभाववद्बुद्धितुल्यताया अनिवार्यत्वादिति. एवं वैदिकेष्वपि कापिलास्तु "अजामित्यादि" श्रुतेः प्रधानस्य विश्वकारणत्वश्रवणात् पुरुषप्रधानातिरेकेण कश्चिदीश्वरो नास्तीति वदंति. जैमिनीयास्तु सुखलक्षणस्वर्गं प्रति ज्योतिष्टोमादिकमैव विधीयते तज्जन्ययजमाननिष्ठापूर्ववशादेव तत्साधनीभूतपदार्थोत्पत्तिसंभवात् वेदांताः कर्तृदेवता द्रव्यपरा अनुष्ठानोपयोगित्वेन सार्थक्यात्, कर्मशेषा एव न ब्रह्मपरा इति वदंति. तस्मादेव विधवादिभिर्वेदेऽपि विप्रतिपन्नत्वात्. एवंविधवैदिकावैदिकप्रविष्टपाषंडमतनिराकरणद्वारा वक्ष्यमाणशक्तिविकासलक्षणमोक्षावाप्तये शास्त्रमारंभणीयमिति सिद्धांतः ॥

एवं चास्य सूत्रस्यायमर्थः अथ अनेकजन्मार्जितशिवपूजादिसत्कर्ममहिम्ना संप्राप्तशमदमादिसाधनसंपन्नस्याधिकारिणः मोक्षविषयकात्युत्कटेच्छाशक्त्याविर्भावानंतरं, अतः अथातो धर्मजिज्ञासेत्यादिस्वव्यतिरिक्तदेवतोपासनालक्षणयागयोगादिकर्मणां "एष कर्मचितो लोकः क्षीयत" इत्यादिश्रुतेः अनित्यत्वेन हेयत्वात् कर्मणो जडत्वेनापूर्वोत्पादनोद्यमशून्यत्वात्, देवतायाश्च शब्दमयत्वेन जडत्वात्, तत एव फलसाधनयोर्गगनकुसुमायमानत्वात्, अनेनैव न्यायेन प्रधानकारणतावादिकापिलमतस्यापि प्रत्याख्यातत्वात्, वेदांतानां भिन्नप्रकरणपठितत्वेन तात्पर्यनिश्चयहेतुकलिंगषट्केन ब्रह्मपरत्वात्, एतदंगीकृतात्मतत्वस्य नानात्वेन परस्परव्यावृत्तरूपत्वात्, अत एव स्वविषयस्वरूपमात्रनिष्ठत्वात् परविषयपरस्वरूपेष्वंधबधिरप्रायत्वात्, चैत्रो मैत्राद्भिन्नः चैत्रः सुखी मैत्रो दुःखीति परस्परभेदानुसंधानं, भेदितानां चैत्रादिप्रकाशानां, चैत्रमहं जानामि मैत्रमहं जानामीत्येकसंविल्लग्नत्वेनांत

रानुसंधानस्याप्यसंभवात्, चैत्रोऽहमिति प्रकाशस्य स्वात्मविषयमात्रप्रकाशकत्वात्. एवमवैदिकांगीकृतक्षणिकविज्ञानात्मनोऽपि नीलादिरूपेण नानात्वात्, तज्जन्यसंस्काराणामपि तथात्वात्, भिन्नकालनिष्ठत्वेन परस्परसंगतिशून्यत्वात्. अत एवोक्तरीत्या स्वविषयस्वमात्रनिष्ठत्वात् परविषयपरस्वरूपेष्वंधवधिरप्रायत्वात्, नीलं पीताद्भिन्नं पीतं नीलाद्भिन्नं नीलमहं जानामि योऽहं बाल्ये पितरावन्वभूवं स एवाहमिदानीं प्रनष्टावनुभवामीत्यहमित्येकसंविल्लग्नत्वेन,बाह्याभ्यंतरानुसंधानानुपपत्तेः उभयक्षणग्राहकसंविदंतराभावात् सुप्त्यादौ हानादानलक्षणप्राणवायुपरिस्पंदस्य विद्यमानत्वेन तस्यकर्तृपुरस्सरत्वात्, कर्तृज्ञानपुरःसरत्वात् सुखमहमस्वाप्समित्युत्थितस्य सुखस्मृतेः संस्कारद्वारानुभवानुभवितृमूलत्वात्, अनुभवितुः स्वतंत्रस्वप्रकाशत्वात्. न किंचिदवेदिषमिति शून्यप्रकाशस्यापि विद्यमानत्वात्, विशेषणविमुक्ताहमात्मनः स्वप्रकाशतांशस्याप्राकट्येन स्थितेरंगीकरणीयतया लोके चिदादिक्रियाणां दर्शितदिशा परप्रमातृविश्रांतिमंतरेणासंभवाच्च. प्रोक्तन्यायेन स्वात्मतादात्म्यापन्नस्वाविमर्शक्रोडीकृतानेकभावाभावमंडलो ज्ञानस्मृत्यपोहनादिबहुविधशक्तीनामेकसंघट्टः अनुभवितृस्मर्तृविकल्पयितृप्रत्यभिज्ञातृरूपः शुद्धानुभवानुसंधानात्मपूर्णाहंस्फुरणस्वरूपस्वतंत्रस्वप्रकाशमहेश्वरोऽगीकरणीय इति हेतोः तादृङ्महेश्वरेच्छाशक्तिनियमितत्वेन पुरुषतत्त्वनिष्ठाविद्यातत्त्वस्य स्वकारणीभूतसर्वज्ञताशक्तिसामरस्यस्थितिरूपनिवृत्तिद्वारा स्वात्मशिवतालक्षणं फलमुद्दिश्य ब्रह्म स्वतंत्रस्वप्रकाशतालक्षणाखंडासर्शपरिबृंहितं. तस्य जिज्ञासा; अनेन पदेन विचारो लक्ष्यते, कर्तव्य इति शिष्यते. स्वात्माभेदेन परामर्शः कर्तव्य इत्यर्थः पराभिमतभेदस्य निराकृतवात्. अस्मिन् सूत्रे अतःशब्देन वक्ष्यमाणसमन्वयाविरोधफलाध्यायार्थः सर्वोऽपि संक्षिप्तः॥ अथशब्देन साधनाध्यायार्थः संगृहीतः ब्रह्मशब्देन जडजीवविलक्षणस्वप्रकाशस्वतंत्रताशक्तिस्वभावत्वं तात्पर्यविषयीकृतमिति सूक्ष्मदृशाऽनुसंधेयं. एवमेतत्सूत्रार्थपरामर्शनमात्रेणात्युत्तमाधिकारी कृतकृत्यो भवतीति नूनं.

एवमुद्दिष्टस्य ब्रह्मणः किं लक्षणं, तेन विना वस्तुस्वरूपावधारणासंभवादित्याशंक्याह ॥ जन्माद्यस्य यतः अस्य इदमित्यंगुलिनिर्देश्य-

त्वेन प्रतीयमानस्य घटचैत्राद्युपलक्षितचराचरप्रपंचस्य जन्मादि जन्म उत्पत्तिः आदिशब्दात् स्थितिसंहारबंधमोक्षा लक्ष्यंते, ते यतः यस्मा-द्भवंति तद्ब्रह्मेति शेषः एवंच सृष्टिस्थितिसंहारतिरोधानानुग्रहाख्यपं-चकृत्यकरणमहापांडित्यं ब्रह्मणो असाधारणं लक्षणमिति तात्पर्यं. अत्र "यतो वा इमानि भूतानि जायंते येन जातानि जीवंति यत्प्रत्ययंत्य-भिसंविशंति तद्विजिज्ञासस्व तद्ब्रह्मेति"–"सत्यं ज्ञानमनंतं ब्रह्मेति" द्वयं विषयवाक्यं यत्प्रयंति म्रियमाणानि इत्यर्थः अभिसंविशंति तद्ब्र-ह्मणि प्रविश्य तादात्म्यं भजंत इत्यर्थः इदं लक्षणं न युज्यते युज्यते वे-ति संदेहः जन्मादेर्विश्वनिष्ठत्वेन ब्रह्मसंबंधाभावात् सच्चिदानंदानां लोके भिन्नार्थकत्वेनानुभूयमानत्वात् धातुभेदाच्च अखंडब्रह्मस्वभाव-त्वासंभवादेतल्लक्षणद्वयमपि न युज्यत इति पूर्वः पक्षः॥

अत्रोच्यते, घटादेः स्वत एवोत्पत्तिविनाशासंभवात् कालकरणसा-पेक्षतया अनुभूयमानत्वात्, करणादीनां कर्मेंद्रियादिद्वारा परिमितप्र-मातृसापेक्षत्वात्, तस्य देशकालाद्यधीनत्वेन स्वतंत्रेण विना न संभव-तीति ब्रह्मनिरूपितत्वेनैव जगन्निष्ठत्वात्, अत एव ब्रह्मसंबंधसद्भावात् लोके सच्चिदानंदानां भिन्नार्थकत्वेऽपि तेषां ब्रह्मण्येकरूपत्वात्. न चैके-नैव पदेन निर्वाहात्किमिति त्रिधा निर्देशः कृतः लक्षणवाक्ये पर्या-यपदप्रयोगस्य वैय्यर्थ्यादिति वाच्यं. खपुष्पाद्यसत्पदार्थवैलक्षण्यद्यो-तनाय सत्पदं, जडस्यापि सद्रूपत्वेन तत्रातिव्याप्तिनिवारणाय चित्प-दं, जीवस्य सच्चिद्रूपत्वेन तत्रातिव्याप्तिनिवारणायानंदपदं, पठितमि-ति विमर्शनीयत्वात्. चिदसीत्यंगीकरणीयत्वेन सच्चिदोरेकरूपत्वात् चिदेव नंदतीत्यानंदस्यापि तदेकरूपत्वात् लक्षणद्वयमप्युपपन्नमेवेति राद्धांतः॥

अत्र जन्मादिलक्षणे सृष्टिकर्तृत्वं चतुर्मुखसाधारणं, सृष्टिस्थितिक-र्तृत्वं विष्णुसाधारणं चतुर्मुखजनकत्वात्,सृष्टिस्थितिसंहारकर्तृत्वं रुद्र-साधारणं तस्य तदुभयजनकत्वात्, "धाताच म इंद्रश्च मे विष्णुश्च म इं-द्रश्च म" इति श्रुतेः सृष्टिस्थितिसंहारतिरोधानकर्तृत्वं ईश्वरसाधारणं त्रिमूर्तीनां तन्नियम्यत्वात्,सृष्टिस्थितिसंहारतिरोधानानुग्रहकर्तृत्वं स-दाशिवसाधारणं "ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिरिति" श्रुतत्वेन चतु-र्णामपि तन्नियम्यत्वात्. अतः पंचकृत्यकरणमहापांडित्यं लक्षणमित्युक्तं

“ आत्मा वा आकाश ” इत्यादिश्रुतेः ब्रह्मणः सकाशादाकाशस्य तदभिमानपुरुषस्य चोत्पत्तेः आकाशाभिमानिनः सदाशिवस्यापि सृज्यकोटिनिविष्टत्वेन परशिवनियम्यत्वात्, पंचकृत्यकरणमहापांडित्यावभावात् तथा विशेषितं जडस्य जीवस्य च विश्वकर्तृतासंभवात् सूत्रानुक्तमपि सच्चिदानंदाख्यस्वरूपलक्षणं तात्पर्यविषयीकृतं ॥

अथवा जन्म आद्यस्य यतः इति विच्छेदः एवं स्थितेः “ सत्यं ज्ञानमनंतं ब्रह्म ” “ नारायणपरं ब्रह्म ” “ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिंगलम् । ऊर्ध्वरेतं विरूपाक्षम् ” इति श्रुतेः बहूनां ब्रह्मणां प्राप्तत्वात्, जिज्ञास्यत्वेनोद्दिष्टं ब्रह्म किं रूपमित्याकांक्षायां, आद्यस्य ब्रह्मादिस्थावरांतप्रपंचोत्पत्तेः पूर्वमुत्पन्नस्य नारायणस्य जन्म उत्पत्तिः यतः यस्माद्भवति, तद्ब्रह्मेति शेषः अत्र “ एको ह वै नारायण आसीत् ” इत्येतद्विषयवाक्यं लक्षणमिदमनुपपन्नमुपपन्नं वेति संदेहः, महोपनिषदि सर्गाद्यसमये एतद्वाक्यानंतरं “ न ब्रह्मा नेशान ” इति श्रुतत्वेन तयोर्निषेधश्रवणात्. अथ तस्मादेव तयोरुत्पत्तिश्रवणात् एतद्व्यतिरेकेण तज्जनकस्य कस्यचिदश्रवणात् “ सदेव सोम्येदमग्र आसीत् ” इत्यादिब्रह्मप्रतिपादकवाक्यवत् सृष्टेः प्राक् नारायणस्यैकस्यैव स्थितिश्रवणात्. अतः सर्वत्र वेदांतेषु सत् ब्रह्मादिरूपेण सामान्यतः श्रूयमाणं विश्वकारणं वस्तु नारायण एवेत्यवगम्यते “ यदग्नीषोमीयं पशुमालभेत ” इत्यत्र गवादिसंदेहे छागो वा मंत्रवर्णादिति पूर्वतंत्रप्रसिद्धछागपशुन्यायात्, अत्रैवाग्रे पत्युरसामंजस्यात् इत्यधिकरणे सूत्रकृतैव शिवस्य विश्वकारणत्वं न संभवतीति निराक्रियमाणत्वात्. नारायणस्य कारणं ब्रम्हेत्येतल्लक्षणं ह्यनुपपन्नं, प्रत्युत रुद्रादिप्रपंचोत्पत्तेः पूर्वमुत्पन्नत्वेन ब्रह्मण एवाद्यत्वात् “ नारायणाद्ब्रह्मा जायते ” “ नारायणाद्रुद्रो जायते ” इति श्रुत्यनंतरपठितत्वाच्च तस्मादाद्यस्य ब्रह्मणः जन्म यतो भवति तद्ब्रह्मेत्येतल्लक्षणं नारायणस्यैवोपपद्यत इति प्राप्ते ब्रूमः अथर्वशिखायां “ किं तद्ध्यानं को वा ध्याता कश्चिध्येय ” इत्युपक्रमप्राप्तप्रश्नानुरोधेन “ ध्यानं विष्णुः ध्याता रुद्रः ध्यायीतेशानं प्रध्यायितव्य ” इति श्रुतत्वेन महोपनिषत्प्रसिद्धनारायणतत्रनिषेधकोटिप्रविष्ठरुद्रयोरत्र तरतमभावेन ध्यानध्यातृरूपत्वमुक्त्वाऽनंतरमीशानस्य ध्येयत्वेन विहितत्वात् नारायणापेक्षया कश्चिन्महेशानोऽस्तीति अवगम्यते, नन्वी-

शानस्य निषेधश्रवणात्, कथं तस्य ध्येयत्वं संभवतीति शंकां निराकर्तुं समनंतरं "सर्वमिदं ब्रह्मविष्णुरुद्रेंद्रास्ते संप्रसूयंते सर्वाणि चेंद्रियाणि सह भूतैर्न कारणं कारणं तु ध्येय" इति श्रूयते अत्र तत्पदस्वारस्यात् महोपनिषत्पठितब्रह्मविष्णुरुद्राणां इतिपरमैश्वर्ये इति धातोः इंद्रपदोपलक्षितान्यत्रप्रसिद्धतत्पुरुषेशानापरपर्यायेश्वरसदाशिवयोश्च जडीभूतभूतेंद्रियादिभिः सह संप्रसूतिप्रवचनेन, तत्तुल्यपारतंत्रीत्युत्पत्त्यवगमात्, न कारणमित्यनेनैतत्कारणीभूतेशानो न संप्रसूयत इति सूचितं. कारणं तु, ध्येय इत्यत्र तु शब्दस्वारस्यात् कार्यकोटिप्रविष्टेशानस्य निषेधश्रवणात्, कारणीभूत ईशानो ध्येय इति सूचितं अत्र कारणं तु ध्येय इत्युक्तत्वेन तत्कारणमन्यदेव स्यादिति शंकां निराकर्तुं, कारणानां उक्तलक्षणसृष्ट्यादिकृत्येषु नियमितानां ब्रह्मादिपंचब्रह्मणां ध्याता रक्षक इत्यर्थः, ध्याता स्वात्मारामः आदिसंकल्पकर्तेति वा, सर्वैश्वर्यसंपन्नः सर्वेश्वरश्च अत्र चकारस्वारस्यात् सर्वेश्वरशब्दवाच्य इत्यर्थः "शंभुराकाशमध्ये शिव एको ध्येयः शिवंकरः" मोक्षप्रद इत्यर्थः ध्यानफलं चोक्तं, सर्वमन्यत्परित्यज्य जननमरणपरिपीडितं देवतांतरं परित्यज्येत्यर्थः. समाप्ताथर्वशिखा इतोतिरिक्तत्वेन वक्तव्यांशो नास्तीत्यभिप्रायेण स्वसमाप्तिं स्वयमेवाह इति स्फुटतरं श्रूयमाणत्वात्. महोपनिषत्प्रसिद्धब्रह्मादिविश्वकारणीभूतनारायणस्यापि कारणीभूतः शिव एको ध्येय इत्यवगमात् "एको ह वै नारायण आसीदिति" अत्र आसीत्पदस्य "रोहितो लोहितादासीत् शक्तेरासीत्पराशरः" इतिवदुत्पत्तिसत्तापरतावश्यंभावेन लक्षणमुपपन्नमेव. ननु अत्र नारायणस्योत्पत्तिः ध्यातृरुद्रापेक्षया वरत्वं च न श्रूयते किंतु विष्णोरेव नारायणस्यानंतावतारसद्भावात् विष्णोः तदवतारमूर्तित्वात् अथवा "आदित्यानामहं विष्णुः" इति गीतितत्वेन तदंशीभूतत्वात् तत्परतोपपत्तेः अत्रत्येशानादिशब्दानां लक्षणया नारायणपरत्वमेव युक्तमिति चेन्न, मुख्यब्रह्मरुद्रमध्यपठितविष्णुशब्दस्यावतारांशपरत्वासंभवात् "यत्प्रायः श्रूयते यच्च तत्तादृगवगम्यत" इति पूर्वतंत्रवार्तिकन्यायात् अन्यथापि किंकारणं ब्रह्मेति संदिह्यमानानां ब्रह्मवादिनां स्वतो निर्णेतुमशक्यत्वात् "देवीं ध्यायतां तत्प्रसादेन जगत्कारणीभूतं ब्रह्म शिव एव" इति निर्णीते श्वेताश्वतरे "य

दा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः । अजात इत्येव कश्चिद्भीरुः प्रपद्यते रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यं ” “ यदा चर्मवदाकाशं वेष्टयिष्यंति मानवाः । तदा शिवमविज्ञाय दुःखशांतिर्भविष्यति ” इति श्रुतत्वेन सृष्टेः पूर्वं विश्वोपादानकारणीभूतप्रकृत्यपरपर्यायाज्ञानलक्षणतमोमात्रावशिष्टकाले दिवारात्रिलक्षणसद्सद्विभागशून्यत्वं प्रतिपाद्य सदाशिवस्यैव स्थितिश्रवणेन द्वितीयस्यावस्थानासंभवात्, तस्याजातत्वश्रवणात्, जननमरणपरिपीडितमुमुक्षुजनप्रार्थनीयत्वश्रवणात्, शिवज्ञानस्यैव मोक्षप्रदत्वश्रवणाच्च. तस्योत्पत्तिविनाशासंभवात् “ सहस्राणि सहस्रशो ये रुद्रा अधिभूम्यां ” इत्यादिश्रुतेः तदवताररूपानंतरुद्रमूर्तिस्तद्भावात् तत्रत्योत्पत्तिविनाशावपि दिक्पालांतर्गतेशानपरावेव स्याताम्, तथाच सृष्टेः प्राक् द्वयोरव्यवस्थानासंभवात् “विष्णुरित्था परमस्य विद्वान् यतो ब्रह्मन्नाभिपाति लयं” इति श्रुत्यंतरे बृहदिति विशेषणसामर्थ्यात् महाविष्णोरेवोत्पत्तिमत्वं परमात्मवेतृत्वमशुद्धमिश्रविलक्षणशुद्धप्रपंचरूपपरशिवराजधानीपरिपालकत्वं च प्रतीयत इति तत्रत्यासीत्पदस्य दर्शितदिशा उत्पत्तिसत्तापरतावश्यंभावेन शिवशंभ्वाद्यनेकशब्दलक्षणं कल्पनायाः अप्रामाणिकत्वात् कैवल्यश्रुतौ “ उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशांतं ॥ ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् । स ब्रह्मा स शिवः सेंद्रः सोऽक्षरः परमः स्वराट् । स एव विष्णुः स प्राणः स कालोऽग्निः स चंद्रमाः ॥ यद्भूतं यच्च भव्यम् ” इत्युक्त्वा “ ज्ञात्वा तं मृत्युमत्येति नान्यः पंथा विमुक्तये ॥ ” इति श्रुतत्वेन इतरनिषेधपुरःसरं मुमुक्षूपास्यस्य परमेश्वरस्योमासहायत्वत्रिलोचनत्वनीलकण्ठत्वश्रवणात् एषां शिवैकांशिकत्वेन कथंचिदपि नारायणपरत्वासंभवाच्च ॥

एवं स्थिते पत्युरसामंजस्यात् इत्यधिकरणे तांत्रिकपाशुपतांगीकृतकेवलविश्वनिमित्तकारणतया निराकृतत्वात्-अत एव शब्दादेव प्रमित इत्यधिकरणे “ अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ईशानो भूतभव्यस्य स एवाद्यः स उश्वः " इति कठवल्लीमंत्रस्य परिच्छिन्नपरिमाणत्वलिंगेन जीवपरत्वमाशंक्य भूतभव्यस्येत्युपपदे सत्यप्येवकारेण

भूतभव्यपदार्थेशितृत्वलिंगं परित्यज्य शब्दादितीशानशब्दाद्ब्रह्मपरता-या अंगीकृतत्वात् ॥

किंच अत्र चराचरग्रहणात् इत्यधिकरणे कठवल्लीद्वितीयवल्ल्यां "य-स्य ब्रह्मक्षत्र उभे भवत ओदनः मृत्युर्यस्यौपसेचनं क इत्यावेद स" इति श्रुतस्य मंत्रस्य जीवाग्निपरत्वमाशंक्य द्वयोरपि तयोर्मृत्युग्रस्तत्वात् मृत्युर्यस्योपसेचनमित्युक्तत्वेन चराचरप्रपंचसंहारकर्तृत्वावगमात् मंत्रोऽयमीश्वरपर इति निर्णीतत्वेन जगत्संहारकत्वमीश्वरलक्षणमित्यंगीकृतत्वात् संहारकर्ता शिव इति प्रसिद्धत्वात् एवं च पत्युः पशुपतेः पाशुपतांगीकृतकेवलविश्वनिमित्तकारणत्वं न संभवति असामंजस्यात् स्वव्यतिरिक्तमृदाद्युपादानकारणांतरसापेक्षकुलालादिवत् स्वात्मौन्मु-ख्यविगलनेनान्यत्रौन्मुख्यात् अदृष्टादिपरतंत्रतापत्त्या अनीश्वरत्वप्रसं-गादिति न कोपि विरोधः ॥

"विश्वाधिको रुद्रो महर्षिरिति" श्रुतेर्विश्वाधिकत्वश्रवणात् एकैक मंत्रद्रष्टृऋष्यपेक्षया सकलमंत्रद्रष्टृत्वेन महर्षित्वात् अत एव ब्राह्मणोत्त मत्वाद्ब्राह्मणैरुपासनीयः पादोदकप्रसादावपि स्वीकरणीयौ भृग्वादि शापस्य विश्वांतर्गतगुणिरुद्रतीर्थप्रसादविषयत्वात् भृग्वादेस्तावत्पर्यं तभावनासंभवात् मुक्तस्थानत्वात् "न स पुनरावर्तत इति" श्रुतेः अलं प्रासंगिकेन " विश्वं नारायणं हरिमिति " श्रुतेः विश्वं विष्णुर्वषट्कार इति तन्नामसहस्रस्मृतेश्च विष्णोर्विश्वांतर्गतत्वात् पतिं विश्वस्येति वि-श्वपतित्वश्रुतेः तस्य स्वकार्यरूपविश्वापेक्षयेति न विरोधः नारायणप रं ब्रह्मेत्यत्र नारायणात्परं ब्रह्मेत्युपपन्नत्वात् अन्यत्र नारायणः परं ब्रह्मे ति पाठे"सुपां सुलुगिति"सूत्रेण पंचम्याः स्वादेशस्य कल्पनीयत्वात् सर्वं समंजसं एवं स्थिते भाविप्रपंचकारणीभूतनारायणाविर्भावभित्तिभूतं परशिवाख्यं वस्तु जगदुदयादिबीजं ब्रह्मेति राद्धांतः ॥

ननु एतावतार्थप्रपंचकारणं ब्रह्मेत्युक्तं भवति शब्दप्रपंचकारणत्वे नोक्तं तत्किं ब्रह्मवन्नित्यं वेत्याशंक्याह शास्त्रयोनित्वात् "अस्य महतो ऽनुभूतस्य निश्वसितमेतत् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वांगिरस' इति विषयवाक्यं अत्र ब्रह्म वेदं न करोति करोतीति संदेहः न करोति वेदस्य नित्यत्वात्, "नीरूपनित्यया वाचेति" श्रूयमाणत्वात् विषयवाक्ये ऽपि वेदस्य ब्रह्मणोऽप्रयत्नसिद्धनिश्वसितरूपतावगमात् " अनादिनि

धना नित्या वागुत्सृष्टा स्वयंभुवा ॥ आदौ वेदमयीं दिव्यां यतः सर्वाः प्र-
वृत्तयः " । इति स्मृतेश्चेति पूर्वः पक्षः अत्राभिधीयते ब्रह्म वेदस्य कर्तृ
भवितुमर्हति निश्वसितन्यायेनाप्रयत्नोत्पत्त्यवगमात् " तस्माद्यज्ञात्स-
र्वहुतः ऋचः सामानि जज्ञिरे" इति सर्वयज्ञहूयमानात् यज्ञशब्दवाच्या-
न्महेश्वरादतिस्पष्टमेव वेदोत्पत्तिश्रवणाच्च निश्वसितन्यायेनाप्रयत्नो-
त्पत्त्यैव अर्थं बुध्वा विरचितैः कालिदासप्रभृतिवाक्यैः वैलक्षण्याद्पौ-
रुषेयत्वं प्रतिसर्गं पूर्वसाम्येनोत्पत्तेः प्रवाहरूपेण नित्यत्वासंभवादिति
राद्धांतः अत्र सर्वविश्वव्यवस्थाप्रकाशकवेदकर्तृत्वनिरूपणेन ब्रह्मणः
सर्वज्ञत्वमुक्तं भवति. पूर्वसूत्रे सर्वकर्तृत्वं निरूपितमिति मंतव्यं.अथवा,
नन्वेवंविधलक्षणोपलक्षिते ब्रह्मणि किं प्रमाणमित्याकांक्षायामाह
शास्त्रयोनित्वात् *तत्र तं चौपनिषदं पुरुषं सृजामीति विषयवाक्यं. अ-
त्र ब्रह्मणः प्रत्यक्षादिप्रमाणगम्यत्वमस्ति वा नवेति संदेहः घटादिव-
त्सिद्धवस्तुत्वान्मानांतरगम्यत्वमस्तीति पूर्वः पक्षः रूपरसाद्यभावात्,
नैंद्रिययोग्यता,नाप्यंतःकरणगोचरत्वं सुखदुःखादिवज्जडत्वप्रसंगात्,
न च सुखादेरंतःकरणावच्छिन्नचैतन्यवेद्यत्वाज्जडत्वं युक्तं, आत्मन-
स्त्वंतःकरणमात्रगोचरत्वान्न जडत्वमिति वाच्यं, अंतःकरणस्य जड-
त्वेन वेदकत्वं न संभवतीत्यभिप्रायेणैव किल घटसुखादेरंतःकरणवृ-
त्त्यवच्छिन्नचैतन्यवेद्यत्वमंगीकृतं. एवं प्रकृतेप्यंतःकरणस्य जडत्वेन वे-
दकत्वासंभवात्, तद्वृत्त्यवच्छिन्नचैतन्यवेद्यताया अंगीकरणीयत्वेन ज-
डतापत्तेरनिवार्यत्वात्, नाप्यनुमानं तस्य प्रत्यक्षमूलत्वेनातिपरिच्छि-
न्नमहेश्वरप्रकाशनापाटवत्वात्. अन्यथा तस्य तदंतर्गततया भासमान-
त्वेन परिच्छिन्नत्वप्रसंगात्, तदनंतर्गतत्वे सति तत्प्रकाश्यत्वासंभवात्
तद्ग्राह्यत्वात्. ननु शब्दलिंगेनाकाशानुमानवत्संभवतीति वाच्यं, आ-
काशस्यापि जन्यत्वेन परिच्छिन्नत्वात् तस्य तत्कर्मत्वेन तदेकरूप-
त्वात्, अन्यथा जलादिवत् तत्तद्धर्मत्वप्रसंगात्, अनुमितिर्विशिष्टनिष्ठ-
त्वेन ब्रह्मस्वभावत्वासंभवात्. एवं शाब्दज्ञानविषयत्वमपि न संभवति
परिच्छिन्नत्वात् स्वातिरिक्तसंविदंतरवेद्यत्वेन घटादिवज्जडत्वप्रसं-
गात् " विज्ञातारमकेतं केन विजानीयादिति " श्रुतिश्चेति चेदित्थमा-

* तत्रकं त्वौपनिषदं इति पाठान्तरम्

लोचनीयं. वेदस्य त्वप्रयत्नसिद्धमाहेश्वरीयनिश्वसितरूपतावगमेन "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुतेः ब्रह्माणं प्रति वेदानां शब्दजालमुपदेष्टुर्महेश्वरस्योक्तेर्विवक्षाधीनत्वात् इच्छायाः सविषयत्वात् "चत्वारि वाक्परिमितापदानि तानि विदुर्ब्राह्मणा ये मनीषिणः गुहात्रीणि निहितानेंगयंति तुरीयं वाचो मनुष्या वदंतीति" श्रुतेः अंकुरायमाणांकुरितपल्लवितफलितलक्षणसूक्ष्मापश्यंतीमध्यमावैखर्यपरपर्यायारंभविवक्षाध्यवसायोक्तिरूपेण स्वविमर्शरूपतावगमात्. अतः स्वानतिरिक्तत्वात् अनधिगतयत्किंचित्तन्माहात्म्यप्रकाशनक्षमत्वात्, वेदैकप्रमाणगम्यमहदैश्वर्यं ब्रह्मेति राद्धांतः ॥

एवंच शास्त्रस्य वेदागमादिशब्दप्रमाणस्य योनित्वात् तन्माहात्म्यप्रकाशनक्षमत्वात् इति सूत्रार्थः। ननु वेदांतानां ब्रह्मपरत्वं न संभवति. अनुष्ठानोपयोगित्वेन निष्प्रयोजनत्वात् कर्तृदेवतासाधनपरत्वे अनुष्ठानोपयोगित्वेन सार्थक्यात्, कर्मशेष एव शब्दार्थलक्षणप्रपंचस्य चिद्विजातीयत्वेन ब्रह्मोपादानकत्वासंभवादुक्तलक्षणं च न संभवतीत्याशंक्याह, तत्तु समन्वयात् तत्तु समन्वयादिति विच्छेदः तुशब्दः पूर्वपक्षनिरासार्थः "अत्र सदेव सोम्येदमग्र आसीदित्यारभ्य स आत्मा तत्त्वमसि श्वेतकेतो" इत्यंतं विषयवाक्यं वेदांताः कर्मपरा वा ब्रह्मपरा वेति संदेहः यजमानस्य दुःखांतरायाद्यसंभिन्नसुखलक्षणस्वर्गं प्रति "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यादिवाक्यैः कर्मैव विधीयते, तज्जन्ययाजमाननिष्ठापूर्ववशादेव तत्साधनीभूतपदार्थोत्पत्तिः देहांतरकालांतरभाविस्वर्गश्च संभवति. एवंच वेदांतेषु जीवप्रतिपादकवाक्यानि कर्तृयजमानपराणि, ब्रह्मप्रतिपादकवाक्यानि देवतापराणि, सृष्टिप्रतिपादकवाक्यानि द्रव्यादिसाधनपराणि, एवमंगीकारे वेदांतानामनुष्ठानोपयोगित्वेन सार्थक्यं ब्रह्मपरत्वे तदभावाद्वैय्यर्थ्यं स्यात्. अतः कर्तृदेवतासाधनपरत्वेन कर्मशेषा एव न ब्रह्मपरा इति प्राप्ते ब्रूमः ॥

वेदांतानां भिन्नप्रकरणपठितत्वेन कर्मशेषत्वं न संभवति "उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम्। अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये" इति तात्पर्यनिश्चयहेतुकलिंगषट्केन ब्रह्मपरत्वात्. तथाहि "सदेव सोम्येदमग्र आसीदित्युपक्रमः" "एतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा" "तत्त्वमसि" इत्युपसंहारः अनयोर्ब्रह्मविषयत्वेनैकं लिंगम्

असकृत्तत्त्वमसि इत्यभ्यासः मानांतरगम्यंमहदैश्वर्यमपूर्वत्वं "येनाश्रुतं श्रुतं भवति अमतं मतमविज्ञातं विज्ञातं" इत्याद्येकविज्ञाने सर्वविज्ञानं फलं. यथा मृत्तिकायां ज्ञातायां घटशरावादिकं तत्कार्यत्वात्तदभिन्नमिति विज्ञातं भवति, तथैवेत्यर्थः सृष्टिस्थितिलयप्रवेशनियमस्थानानि पंचार्थवादाः मृदादिदृष्टांता उपपत्तयः एतैर्लिंगैर्ब्रह्मपरत्वात्. न चानुष्ठानमंतरेण प्रयोजनाभावः देहाद्यहंतानिमज्जनद्वारा पूर्णाहंभावोन्मज्जनरूपमहाफलस्य संभवात्. नन्वेवं वेदांतानां ब्रह्मपरत्वेऽपि ते ब्रह्मण्येव न पर्यवस्यंति किंतु "सत्यं ज्ञानमनंतं ब्रह्मेति" पारोक्ष्येण ब्रह्मतत्त्वं प्रतिपाद्य पश्चादपरोक्षं विदधति. एवं सति वेदांतानां शासनात् शास्त्रत्वमुपपद्यते अनधिगतार्थगंतृत्वात्. किंतु श्रोतव्य इति शाब्दज्ञानात्मकं श्रवणं विधायानंतरं "मंतव्यो निधिध्यासितव्य" इति अनुभवज्ञानात्मकं विधीयते. तस्माद्वेदांताः प्रतिपत्तिविधायका इति चेन्न, कर्तुमकर्तुमन्यथाकर्तुमशक्यत्वेन अपुरुषार्थत्वात्, प्रतिपत्तिविधिर्न संभवत्येव अनुष्ठेयशासनादेव शास्त्रत्वं नान्यथेति नियमो नास्ति. सिद्धवस्तुसाधनेनापि तदुपपत्तेः न च शाब्दज्ञानेन ज्ञाते पश्चादनुभवात्मकं मननादिकं विधीयत इति वक्तुं युक्तं, दशमस्त्वमसीतिवत् शब्दस्यैवापरोक्षज्ञानजनकत्वेन शाब्दबोधात्पुरैव असंभावनादिनिवृत्तये कर्तृव्यापाररूपमननादेर्विधानात्, प्रमाणानां मोहापसरणमात्रप्रयोजनत्वात् घटोऽयमग्रतः प्रत्यक्षत्वादित्यादौ तथानुभूयमानत्वात्. अत्र घटो न क्रियते सिद्धत्वात्, न ज्ञाप्यते प्रत्यक्षेणैव ज्ञाप्यमानत्वात्, किंत्वग्रकत्वसाधनेनाग्रक इति मोहोऽपनीयत इति. एवं धूमलिंगेन वन्हिमत्वसाधनेन वन्हिमत्वरूपमोहोऽपसार्यत इति वेदांताः ब्रह्मण्येव पर्यवसिताः "अत एतदात्म्यमिदं सर्वं तत्सत्यमिति" श्रुतत्वेन सन् घटः सन् पट इत्यादिरूपेण सर्वत्र सामान्यादिषु सत्ता जडे विलक्षणस्वरूपसत्तानुवृत्तिदर्शनेन सत्कार्यत्वादुक्तलक्षणमभ्युपपत्तेः जडस्य स्वतःसिद्धसत्तानुवृत्त्यसंभवात्, स्वतंत्रतापत्तेः परतःसिद्धसत्तानुवृत्त्यसंभवप्रकारस्य दर्शितत्वात्, सच्चिद्घनत्वमकामेनाप्यंगीकरणीयमिति कर्मणो जडत्वेनादृष्टोत्पादनोद्यमशून्यत्वात्, अदृष्टस्यापि जडत्वेन स्वर्गतत्साधनीभूतद्रव्योत्पादनोद्यमशून्यत्वात्. सर्वप्रपंचसत्तारूपस्वतन्त्रस्वप्रकाशब्रह्मैव सर्ववेदांतप्रतिपाद्यमिति सिद्धांतः ॥ एवं सति तात्पर्य-

निश्चयहेतुकलिंगषट्केन वेदांतानां ब्रह्मणि समन्वयात् तद्ब्रह्म उक्तल-
क्षणप्रमाणगम्यमहदैश्वर्यमिति भावः

ननु "असंगो ह्ययं पुरुष" इतिश्रुतेः ब्रह्मणो विश्वकारणत्वं न सं-
भवत्येव, किंतु वेदांतेषु कारणवाक्यानि प्रधानपराण्येव, तथा श्रूयमा-
णत्वादित्याशंक्याह ईक्षतेर्नाशब्दं ईक्षतेः न अशब्दं इति विच्छेदः छां-
दोग्ये षष्ठाध्याये "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म" इति
प्रस्तुत्य "तदैक्षत बहुस्यां प्रजायेयेति" "तत्तेजोऽसृजतेति" श्रूयते
इदं विषयवाक्यं, अत्र तच्छब्दवाच्यं विश्वकारणं प्रधानं वा ब्रह्म वेति
संदेहः अत्र सांख्या वदंति तच्छब्दवाच्यं सर्वजगत्कारणं प्रधानमेव
"अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयंतीं सरूपां" इति श्रू-
यमाणत्वात् तस्य सत्वगुणयुक्तत्वात् परिणमनक्रियास्वभावत्वाच्च
ज्ञानक्रियाशक्त्योरपि संभवात्. ब्रह्मणो निर्विशेषत्वेन तदसंभवादिति
प्राप्ते ब्रूमः तदैक्षतेत्यत्र ईक्षितृत्वश्रवणात्, प्रधानस्य जडत्वेन तदसंभ-
वात्, तच्छब्दवाच्यं चेतनं ब्रह्मैव, तस्य निःसंगत्वं निर्गुणत्वं च नैय्या-
यिकांगीकृतस्वव्यतिरिक्तगुणसंगराहित्यात्, स्वरूपानतिरिक्तज्ञानक्रि-
ययोरंगीकरणीयत्वात्. अन्यथा जडत्वप्रसंगात्. इष्टापत्तौ पुरुषस्य प्र-
कृतिप्रेरकत्वासंभवेन विश्वोत्पत्तिरेव न स्यात् प्रकृतेर्जडत्वेन प्रेरकां-
तरेण कार्योत्पादनाक्षमत्वात्. न च "तेज आप ऐक्षंत" इतिवद्गौण-
मीक्षणं प्रधानस्य संभवतीति वाच्यं "हंताऽहमिमास्तिस्रो देवता अ-
नेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति मध्ये त्वसि-
ताद्यपरित्यक्तनामरूपव्याकर्त्री विश्वकारणदेवता स्ववाचकेनात्मशब्दे-
न चेतनजीवं व्युपदिशतीति उपसंहारे "स आत्मा तत्त्वमसि श्वेत-
केतो" इति शिष्यं प्रति जगत्कारणतादात्म्यं गुरुणोपदिश्यत इति गौ-
णेक्षणस्याप्यसंभवात्.

नन्वत्र "जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति श्रुतत्वात्
जीवस्य विश्वकारणतावगमात्. कथं विश्वकारणत्वं ब्रह्मासाधारणल-
क्षणं भवितुमर्हतीति चेत् न जीवशब्दस्य ज्ञानक्रियास्वभावचेतनपर-
त्वात् "जानता कुर्वता भाव्यं जीवता परयोगिना। दृक्क्रियासदसत्त्वे
वै हेतुरैश्वर्यजाड्ययोः" ॥ इति शिवदृष्टिस्मृतत्वाच्च ज्ञानक्रिये विना
प्रपंचस्य व्याकर्तुमशक्यत्वात्. नन्वेवमपि ज्ञानक्रियास्वभावत्वं जी-

वसाधारणं भवति पुरुषतत्त्वमेव तच्छब्दवाच्यं किं न स्यादिति चेन्न.
"आत्माप्यनीशः सुखदुःखहेतोः ब्रह्मविष्णुरुद्रेंद्रास्ते संप्रसूयंत" इति-
श्रुतेः ब्रह्मादीनामपि भूतेंद्रियादिभिस्तौल्येन परतंत्रोत्पत्तिश्रवणेन सु-
खदुःखादिदूषितत्वेन च विश्वकारणत्वासंभवात्, कार्यकोटिप्रविष्ट-
त्वात् तत्कारणीभूतमहेश्वरस्य सर्वैश्वर्यसंपन्नः सर्वेश्वरश्चेति सर्वैश्व-
र्यशालित्वसर्वेश्वरशब्दवाच्यत्वयोः श्रवणात्, प्रकृतिनिष्ठस्य पुरुषस्य
स आत्मा तत्त्वमसीति मोक्षोपदेशाच्च, नातिव्याप्तिः। गोमयादेर्वृश्चि-
काद्युत्पत्तिदर्शनात्, ऊर्णनाभिदृष्टांताच्च, ब्रह्मणः स्वतंत्रत्वात् न स्वव्य-
तिरिक्तकारणांतरसहायापेक्षा. अन्यथा क्रियाशक्तिविहीनत्वे सति ब्र-
ह्मणः शुक्तिरजतादिवदलीकत्वमापतेदिति स्वतंत्रस्वप्रकाशताशक्ति-
परिबृंहितं ब्रह्मैव तच्छब्दवाच्यमिति राद्धांतः ॥

एवं च अशब्दं वक्तृत्वशून्यं प्रधानं न विश्वकारणं भवितुमर्हति-
ईक्षतेः ईक्षितृत्वश्रवणादिति सूत्रार्थः अस्मिन्नधिकरणे वक्ष्यमाणावि-
रोधाध्यायार्थः सर्वोऽपि संगृहीतः। तन्निष्ठस्य मोक्षोपदेशादित्युत्सूत्रि-
तत्वात् फलाध्यायार्थश्च समन्वयसूत्रे समन्वयाध्यायार्थः जिज्ञासासूत्रे
साधनाध्यायार्थः सर्वोऽपि संगृहीतः इत्युत्तमाधिकारिणं प्रति ईक्षत्यंतै-
व ब्रह्मविद्या. मध्यमाधिकारिणं प्रति पंचपादिका. अधमाधिकारिणं प्रति
अवशिष्टशास्त्रं प्रवृत्तमिति मंतव्यं. अत्र प्रणवार्थसारभूतसकलसाधार-
णसद्रूपात्मत्वजडोत्कृष्टत्वजीवविलक्षणमहदैश्वर्यसंपन्नतारूपसच्चिदा-
नन्दाख्यस्वरूपलक्षणमेव प्रकटीकृतमिति सूक्ष्मदृशा विलोकनीयम् ॥

अग्रे तदनन्यत्वमारंभणशब्दादिभ्यः ॥ आत्मकृतेः परिणामात् कृ-
त्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ आत्मनि चैवं विचित्राश्च हि
॥ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् नेतरोऽनुपपत्तेः ॥
इत्यादिसूत्रैः जडाजडप्रपंचस्य कर्तृमहेश्वराभिन्नत्वमेव विशेषतः प्र-
कटीक्रियते, अत्र मायाशब्देन "मायां तु प्रकृतिं विद्यान्मायिनं तु म-
हेश्वरम्" ॥ इति श्रुतेः स्वाभाविकप्रकृतिः कथ्यते सा च प्रकृष्टाकृति-
रिति व्युत्पत्त्या अघटनघटनापटुतरा कर्तृस्वभावभूता क्रियाशक्तिः क-
थ्यते. तस्मादियमेव विद्या विद्या न भवतीत्यविद्या मिथ्याभूतेति न वि-
रोधः "तस्यावयवभूतेन व्याप्तमेतच्चराचरम्" इत्यग्रे श्रवणात् एवं भू-

तमायिनो महेश्वरस्यावयवभूतेन अंशावताररूपेण नारायणेन जगत्स- र्वं व्याप्तमित्यवगमात् " श्रोत्रं च श्रोतव्यं च नारायण " इत्यादिश्रुते- श्च सापेक्षया भाविविश्वोपादानकारणं नारायण एवेति तस्य विमर्शां- शत्वमवगंतव्यम् ॥

" रसोऽहमप्सु कौंतेय प्रभाऽस्मि शशिसूर्ययोः ।
प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ "

इति गीतत्वाच्च. एवंस्थिते ब्रह्मणः तावत् दृक्क्रियास्वभावत्वेन चेत- नत्वात् " अतश्चैतन्यमात्मेति " शिवेनापि सूत्रितत्वात्, ब्रह्मशिवसूत्र- योरेकार्थविश्रांतत्वेन विरोधाभावात्. शास्त्रैक्यं विमर्शनीयं ॥

अथ " विशब्देनोच्यते विद्या शिवजीवैक्यबोधिका ॥ तस्यां रमंते ये शैवा वीरशैवाः प्रकीर्तिताः " ॥ इति तत्सिद्धांतवचनात् तेनापि वि- रोधाभावात् तदैक्यं विमर्शनीयं. तत्सिद्धांतस्य लिंगांगसामरस्यप्र- तिपादकत्वात्, तथाहि तदागमेषु ॥ " घनलिंगं महाभासं सच्चिदानं- दलक्षणं ॥ निष्कलं निष्क्रियं शांतं स्वतंत्रं स्वप्रकाशि तत् ॥ सर्वेषां स्थानभूतत्वाल्लयभूतत्वतस्तथा ॥ तत्त्वानां महदादीनां स्थलमित्यभि- धीयते ॥ स्थाणौ सर्वाश्रयेऽनंते सच्चिदानंदरूपिणि ॥ यस्मिन् ब्रह्मणि लीयेत प्रपंचस्तत्स्थलं स्मृतम् ॥ स्वशक्तिक्षोभमात्रेण स्थलं तत् द्विविधं भवेत् ॥ एकं लिंगस्थलं प्रोक्तमन्यदंगस्थलं स्मृतम् ॥ लिंगस्थलं त्रि- धा ज्ञेयं भावप्राणेष्टभेदतः ॥ प्रथमं भावलिंगं स्यात् द्वितीयं प्राणलिं- गकम् ॥ तृतीयमिष्टलिंगं स्यादित्येवं त्रिविधं स्मृतम् ॥ एकमेकं स्थलं भूयो द्विविधं द्विविधं भवेत् ॥ महालिंगं प्रसादाख्यं भावलिंगविभाग- जं ॥ प्राणलिंगाज्जंगमाख्यं शिवलिंगं च भिद्यते ॥ गुरुलिंगं तथाचार- लिंगमिष्टविभागतः ॥ अंगस्थलं तथा प्रोक्तमाचार्यैः सूक्ष्मदर्शिभिः ॥ योगांगं प्रथमं प्रोक्तं भोगांगं च द्वितीयकम् ॥ त्यागांगं च तृतीयं स्या- दित्येवं त्रिविधं स्मृतम् ॥ योगांगमैक्यं शरणं स्थलमित्युभयं भवेत् ॥ प्राणलिंगि प्रसादीति द्वयं भोगांगमिष्यते ॥ माहेश्वरस्थलं भक्तस्थल- मित्युभयं स्थलं ॥ त्यागांगं भवतीत्येव प्रोच्यते तत्त्वदर्शिभिः " ॥ इ- अयं भावः सकलप्रपंचसृष्टिस्थितिलयभित्तिस्थानभूतं वस्तु स्थलश- ब्देनाभिधीयते ॥ तद्वस्तूक्तलक्षणमूलप्रणवप्रकाशैकविग्रहं परशिवत- त्वं मानांतरनिरपेक्षभासमानत्वात्, स्वप्रकाशं कारणांतरनिरपेक्ष-

र्वीणत्वात्, स्वतंत्रं अत एवान्यनिरपेक्षवर्तमानं अत एवाकर्मकाक्रमस्वसंवेदनलक्षणसच्चिदानंदस्फुरणमयं एवंविधपरिपूर्णाहंतात्मकपरमशिवस्य पूज्यपूजकलीलायां निस्तरंगसमुद्रे तरंगोत्पत्तेः प्राक् लहरीव स्वात्मनि ईषच्चलनमुत्पद्यते. तच्चलनेनान्योन्यसमरसीभूतस्वतंत्रस्वप्रकाशतांशमात्रे तूत्तमकर्तृतामात्रवियोगात्, न्यूनाधिकभावेन स द्विधा भिद्यते. तत्राधिकभावापन्नस्वप्रकाशतायां प्रतिस्फुरणगत्या प्रविष्टमूलप्रणवरूपाशिवचैतन्यमेव लिंगतत्त्वं भवति. न्यूनीभूतस्वप्रकाशतायां तथैव प्रविष्टशिवचैतन्यमेवांगतत्त्वं भवति ।

तत्र लिंगतत्त्वं तु क्रमेण सच्चिदानंदप्रतिफलनकलनात्मकभावलिंगमिति, प्राणलिंगमिति, इष्टलिंगमिति, त्रिविधं भवति. पुनरिदं लिंगत्रयं प्रत्येकं द्विविधं भवति. तत्र भावलिंगं हि महालिंगं प्रसादलिंगमिति द्विविधं भवति प्राणलिंगं तु जंगमलिंगं शिवलिंगमिति द्विविधं भवति. इष्टलिंगं तु गुरुलिंगं आचारलिंगमिति द्विविधं भवति. एवं लिंगस्थलं षड्विधं भवति ।

सा स्वतंत्रस्वप्रकाशताशक्तिरेव क्रमादेषु लिंगेषु सूक्ष्मकार्यकरणप्रपंचोपादानकारणीभूतचिच्छक्त्यपरपर्यायप्रणवरूपशांत्यतीतोत्तराख्यकलेति, आनंदरूपपराशक्त्यपरपर्याययकारमयशांत्यतीतकलेति, औन्मुख्यलक्षणादिशक्त्यपरपर्यायवाकाररूपशांतिकलेति, सूक्ष्मक्रियालक्षणेच्छाशक्त्यपरपर्यायशिकाररूपविद्याकलेति, बहिर्मुखीज्ञानशक्त्यपरपर्यायमकारमयप्रतिष्ठाकलेति, स्थूलोद्यमक्रियाशक्त्यपरपर्यायनकाररूपनिवृत्तिकलेति, षड्रूपतामगमत् ॥ एवं च महालिंगं तावत् सर्वपदार्थानुसंधानलक्षणहृदयरूपत्वात्, शुद्धानुसंधातृरूपगोप्यमुखमित्युच्यते. प्रसादादिलिंगपंचकं तु क्रमेण शब्दादिप्रतिनियतपदार्थानुसंधातृरूपेशानतत्पुरुषाघोरवामसद्योजाताख्यप्रकटपंचमुखमित्युच्यते. एवं विधलिंगतत्त्वस्य सागरतरंगभंगिन्यायेनाभेदपर्यवसायिभेदप्रधानलक्षणशुद्धानुसंधातृरूपत्वेनानुग्रहहेतुत्वादुपास्यमित्युच्यते. एवमंगतत्त्वं च त्रिविधं. स्वात्मगुरुलिंगजंगमानामैक्ययोगानुसंधानलक्षणयोगांगमिति तदर्पितप्रसादपरमोपादेयस्वीकारसुखपरिणमनलक्षणभोगांगमिति. गुरुलिंगजंगमेष्ववंचनीयपरित्यजनीयतनुमनोधनरूपत्यागांगमिति. इदं च प्रत्येकं द्विविधं भवति. योगांगं तु ऐक्यं शरणमिति भिद्यते. भोगांगं

तु प्राणलिंगि प्रसादीति भिद्यते. त्यागांगं तु माहेश्वरं भक्तस्थलमिति भिद्यते. एवं षड्विधांगप्रकाशानां न्यूनीभावमापन्ना सा शक्तिरेव सम-रसभक्तिरित्यानंदभक्तिरित्यनुभवभक्तिरित्यवधानभक्तिरिति, नैष्ठि-काभक्तिरिति, श्रद्धाभक्तिरिति, षड्विधभक्तिरूपतां भावज्ञानमनोबुध्यहं-कारचित्तलक्षणांतःकरणषट्कतां श्रोत्रादिज्ञानेंद्रियरूपतां शब्दादित-द्विषयतृप्तिलक्षणषट्पदार्थतां तद्वाचकषडक्षरीरूपतां क्रियासाधनीभूत-वागादिकर्मेंद्रियरूपतां सूक्ष्मरूपाकाशादिभूतपंचकसमष्टिरूपतां स-द्भावसुज्ञानसुमनोनिरहंकारसुबुद्धिसुचित्ताख्यषट्करूपतां च प्राप्यां-गमभवत्. एवंविधांगतत्त्वस्य महेश्वरीयलीलाशक्तिपरिकल्पितसं-कुचितचिदादिशक्तिस्वभावत्वेपि सूक्ष्मरूपमानसव्योमाद्युपाधिसंव-लितत्वेनोर्ध्वसृष्टिरूपविभागनिबन्धनभेदप्रधानलक्षणशुद्धविद्याप्रमा-तृरूपत्वादुपासकमित्युच्यते. एवं च लिंगतत्त्वस्य शरणतत्त्वमंगं, शरणस्य लिंगं प्राणः, अनयोर्बीजवृक्षन्यायेन अन्योन्यसामरस्य-मेव. एवमनादितः शरण एव लिंगं लिंगमेव शरण इति नूनं. अथैवंविधशरणस्य स्वविमर्शलक्षणगुरुकटाक्षसंप्राप्तस्वात्मप्रत्यभि-ज्ञानशालित्वात्, एतन्मन एव प्रणवरूपमहालिंगं बाह्येंद्रियलक्षणश्रो-त्राद्येकैकेंद्रियविषयशब्दादिसकलपदार्थग्रहणसाधनत्वेनांतर्मुखत्वात्, नादसुनादमहानादरूपदेशिकवाक्यशास्त्रविवक्षाध्यवसायोक्तिरूपप-श्यंत्यादिक्रमेणानुग्रहात्मकप्रसादहेतुत्वात्, शब्दग्रहणसाधनश्रोत्रमेव यकाररूपप्रसादलिंगं चरजंगमयोः पर्यायत्वात्, तस्य त्वक् सर्वांगं व्याप्ता सती तत्र शीतादिस्पर्शसाधनत्वात्. वाकारमयजंगमलिंगं महाप्रकाश एव नेत्रगोलकं प्रविष्टः सन् सकलरूपपदार्थप्रकाशनसाधनत्वात् नेत्रमेव शिकारमयशिवलिंगं गुरोर्मंत्रमूर्तित्वात् षडक्षरीमंत्र एव मधुराम्लादिषड्रसरूपतां प्राप्त इति तादृङ्मंत्रोच्चारणरसास्वादनसाधनत्वात्. जिव्हैव मकारमयगुरुलिंगं ईडापिंगलाख्यनाडीद्वारा प्राणवायुसंचाराश्रयत्वात् सत्कर्माचरणहेतुभूतदेहशुद्धिरूपरेचकादिक्रमोत्पन्नप्राणायामाचरणसाधनत्वाच्च, घ्राणमेव नकारमयमाचारलिंगमिति भण्यते. एवं लिंगलक्षणमवगंतव्यं ॥

अथ गुरुलिंगजंगमानामैक्यधिया भस्मरुद्राक्षादिशिवलांछनेषु शिवशरणेषु च प्रीतिलक्षणभक्तिमानेव भक्तः ॥

"महात्मा ज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः ॥
स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा" ॥

इति शंकरसंहितोक्तेः, शिव एव श्रीगुरुलिंगजंगमात्मक इति निष्ठावानेव महेश्वरः, गुरुलिंगजंगमपादोदकप्रसादभूतिरुद्राक्षमंत्रलक्षणाष्टावरणैतदंतर्गताद्यपंचविधवर्तनपंचाचारेषु विस्मृतिशून्यत्वेन सावधानवानेव प्रसादी. व्याध्यादौ संप्राप्ते, पादोदकप्रसादव्यतिरेकेण लिंगार्पितौषधं चायं न स्वीकरोतीति ताभ्यां विशिष्टः लिंगमेव प्राणः प्राण एव लिंगमित्यनुसंधानवानेव प्राणलिंगी. तादृशप्राणलिंगमेव पतिः स्वयमेव सतीति सतीपतिभावमापन्नः सन् सत्याः सत्यंतरं नास्तीत्यन्यसतीसंगं परित्यज्य स्वचिच्छक्तिसंमेलनानंदभरितः सन् निवृत्तिमार्गमवलंब्य भक्तिज्ञानवैराग्यसंपन्न एव शरण इत्युच्यते. एवंविधसतीपतिभावनिवृत्त्याविर्भावनिराभासः सन्. विकल्पवैमुख्येन सर्वं शिवात्मकमिति विमृशन् शिखिकर्पूरयोगवत् अंतर्मुखमहालिंगैकलोलीभूत एवैक्यः । इत्यंगस्थलं विमर्शनीयं. अत्र कर्पूरस्य भूतत्वरूपत्वात्, तस्य परंपरया तेजःकार्यत्वात्, कार्यनाशस्य कारणात्मना स्थितिरूपत्वात्, न स्वरूपहानिरिति शंकावकाशः। एवं च भक्तादिषड्विधशिवशरणानां आचारादिषड्विधलिंगानां च संबंधो विमर्शनीयः तदुक्तं भवति ॥

आचारलिंगं घ्राणाख्यं भक्तस्थलसमाश्रयं ॥
निवृत्तिकलयोपेतं गंधग्रहणसाधनम् ॥

गुरुलिंगं तु जिव्हाख्यं महेशस्थलसंश्रयं ॥ प्रतिष्ठाकलयोपेतं रसग्रहणसाधनम् ॥ शिवलिंगं तु नेत्राख्यं प्रसादिस्थलसंश्रयम् ॥ विद्याकलासमोपेतं रूपग्रहणसाधनम् ॥ त्वगाख्यं जंगमं लिंगं प्राणलिंगस्थलाश्रयम् ॥ शांत्याख्यकलयोपेतं स्पर्शग्रहणसाधनम् ॥ प्रसादलिंगं श्रोत्राख्यं शरणस्थलसंश्रयम् ॥ शांत्यतीतकलोपेतं शब्दग्रहणसाधनम् ॥ मानसं तु महालिंगमैक्यस्थलसमाश्रयम् ॥ शांत्यतीतोत्तरोपेतं सर्वग्रहणसाधनम्" ॥ इति ॥

अत्र मानसादीनां करणरूपत्वेऽपि घ्रातृत्वादिलक्षणचैतन्यस्य घ्रेयादिपदार्थस्वीकारसाधनत्वेन तदेकनिष्ठत्वात्, लिंगरूपत्वव्यपदेशः। अन्यथा घ्रातुर्घ्राणरसने वाग्गंधग्रहणसाधनं स्यादिति तात्पर्यं. भक्तादि-

लक्षणं तु स्कांदे शंकरसंहितायां "सदाचारः शिवे भक्तिर्लिंगे जंगम एकधीः ॥ लांछने शरणे भक्तिर्भक्तस्थलमनुत्तमम् ॥ परस्त्रियं परार्थं च वर्जितो भावशुद्धिमान् ॥ लिंगनिष्ठानियुक्तात्मा माहेश्वरमहास्थलम् ॥ लिंगार्पितपदार्थं च सुभोगी लिंग आहितः ॥ अनर्पितविवर्जी च प्रसादिस्थलमुत्तमं ॥ वायौ प्राणगुणे लिंगं लिंगे प्राणः समाहितः ॥ सुखदुःखोभयं नास्ति प्राणलिंगिस्थलं भवेत् ॥ पतिर्लिंगं सती चाहं हृदि युक्तः स्वयं प्रभुः ॥ प्रापंचिकसुखं नास्ति शरणस्थलमुत्तमम् ॥ षडूर्मयश्च षड्भावा नास्ति चाष्टविधार्चनम् ॥ निर्भावो निजलिंगैक्यः शिखिकर्पूरयोगवत् ॥" इति अत्र शरणस्य प्रापंचिकसुखं नास्तीत्यनेन स्त्रीपरिग्रहो नहीति सूचितं ॥ एवं चात्रांगस्थलस्य लिंगस्थलांतर्गतत्वात्, शांत्यतीतोत्तराख्यकलोपेतमहासादाख्यमहालिंगतत्त्वमेकं. शिष्टपंचलिंगगतकलापंचकं शिवसादाख्यामूर्तिसादाख्यमूर्तिसादाख्यकर्मसादाख्यकर्तृसादाख्यरूपसादाख्यपंचकं मिलित्वा लिंगतत्त्वान्येकादशेति संकेतः। एवं सति, निष्कलघनलिंगतत्त्वस्य महालिंगं मानसाख्यांतर्मुखं प्रसादादिलिंगपंचकं बाह्यमुखपंचकं सादाख्यपंचकं तु ईशानाद्यपरपर्यायनामधेयपंचकमिति तात्पर्यं. अथ पुनस्तस्य महेशितुः स्थूलप्रपंचनिर्माणलीलायां आचारलिंगनिष्ठक्रियाशक्त्यपरपर्यायनिवृत्तिकलावशात्, अहंकारादिभूम्यंतत्रयोविंशतितत्त्वमूलकारणीभूतसत्वरजस्तमोगुणात्मकप्रकृत्यपरपर्यायमायातत्त्वमुत्पन्नं भवति. तत्र सात्विकादिगुणप्रविष्टचैतन्यमेव रुद्रविष्णुब्रह्माख्यया व्यवह्नियते. क्रमेण वन्हिसूर्यसोमाश्चैतदंतर्गताः ब्रह्मक्षत्रवैश्यशूद्राख्याश्चत्वारो वर्णाश्च. "चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागतः" इति भगवतैव भाषितत्वात्, कथं गुणत्रयाद्वर्णचतुष्टयोत्पत्तिरिति नाशंकनीयं "विश्वाधिको रुद्रो महर्षिः पुरुषो वै रुद्रः सन्महो नमः" इति श्रुते शुद्धस्फटिकसंकाशत्वाच्च सत्वगुणप्रविष्टचैतन्यरूपमहर्षिरुद्रांशीभूत ब्राह्मणोत्पत्तिः सत्वगुणात्. रजोगुणस्य मिश्रितत्वात् तद्गतसत्वांशत स्तु वैष्णवराजन्योत्पत्तिः ।तद्गततमोंऽशेन ब्रह्मांशीभूतवैश्योत्पत्तिः तमोगुणादिंद्रांशीभूतशूद्रोत्पत्तिः। अन्ये देवाः संकराः। उक्तं च पाराशरोपपुराणे "संकराः सर्वदेवाः स्युर्वृषलश्च पुरंदरः ॥ पितामहस्तु वैश्यः स्यात् क्षत्रियः परमो हरिः ॥ ब्राह्मणो भगवान् रुद्रः सर्वेषामुत्तमोत्त

मः ॥ ब्रह्मभूतस्य रुद्रस्य ब्राह्मण्यं नैव हेतुजम् ॥ " इति ननु? पुराणेषु सर्वत्र विष्णुः सात्विकः रुद्रस्तामस इति स्मर्यमाणत्वात्कथमुक्तार्थ-सिद्धिरिति चेन्न.विष्णुरुद्रयोः सात्विकतामसोक्तेःपालनसंहारोपाधिकृ-तत्वात्, स्वभावतस्तु विष्णुस्तामसः रुद्रः सात्विक एव. तदुक्तं भाग-वत एव ॥ " सत्वं रजस्तम इति प्रकृतेर्गुणाः स्युर्युक्तः परः पुरुष एव इहास्य धत्ते ॥ स्थित्यादयो हरिविरिंचिहरेतिसंज्ञा" इति "न ते गिरित्राखिललोकपालविरिंचिवैकुण्ठसुरेंद्रगम्यम् ॥ ज्योतिः परं यत्र रजस्तमश्च सत्वं न यद्ब्रह्म निरस्तभेदमिति " ॥ अत्र प्रथमश्लोके क्रमा-लंकारेण विष्णोः सात्विकत्वं रुद्रस्य तामसत्वं च पालनाद्युपाधिकृत-मिति स्पष्टमेव प्रतीयते. कालकूटविषोल्बणप्रस्तावे रुद्रं प्रति, न ते गि-रित्रेति ब्रह्मप्रोक्तवचने क्रमालंकारेण वैकुंठस्य तमोगुणत्वं सुरेंद्रापर-पर्यायरुद्रस्य सात्विकत्वं च स्वभाविकं प्रतीयते. शुक्लवर्णत्वाद्रुद्रस्य कृष्णवर्णत्वाद्विष्णोरिति, अस्मिन्नर्थे स्कांदपुराणे ॥ " शौक्ल्यं सत्वगु-णाज्जातं रागो जातो रजोगुणात् ॥ कार्ष्ण्यं तमोगुणाज्जातमिति विंद्यात्समासतः ॥ यस्य मायागतं सत्वं शरीरं स्यात्तमोगुणः ॥ संहा-राय त्रिमूर्तीनां स रुद्रः स्यान्न चापरः ॥ तथा यस्य तमः साक्षाच्छ-रीरं सात्विको गुणः ॥ पालनाय त्रिमूर्तीनां स विष्णुः स्यान्नचापरः " इति स्मृतत्वाच्च. अत्र ब्रह्मादिकीटांताः सकलाः त्रिमलिनः विष्णुः प्र-लयाकलो द्विमली प्रलये कलाशून्यत्वात्. ज्ञानी रुद्रो हि विज्ञानाकलः कलाशून्यत्वात् सदा ज्ञानी संहाराय मायैकमली. ऊर्ध्वकोटिगतत्या-गांगप्रकाशस्तु कार्म्यैकमलवासनाविशिष्टत्वान्मंत्रः भोगांगाभासस्तु कार्ममलवासनाक्षयौन्मुख्यरूपत्वान्मंत्रेश्वरः योगांगप्रतिभासस्तु प्राप्त-कार्ममलवासनाक्षयरूपत्वान्मंत्रमहेश्वर इति भण्यते एवमेते षड्विध-प्रमातरः निष्कलघनलिंगप्रकाशस्तु अनुत्पन्नमलोल्लासपूर्णाहंस्फुरण-मयीति विवेकः। अत्रान्योन्याभावलक्षणभेदप्रधानरूपमायाकार्यकोटि-प्रविष्टमंगतत्त्वं पंचविंशतिसंख्याकमिति बोध्यं. अत्रांतःकरणत्रयं ज्ञानें-द्रियपंचकं च सत्वकार्यं, कर्मेंद्रियपंचकं राजसं, तन्मात्रपंचकं भूतपंचकं च तामसमित्यवगंतव्यं ॥

अत्र " बहूनां जन्मनामंते ज्ञानवान्मां प्रपद्यत " इति भगवदुक्तेः अ-नेकजन्मार्जितशिवपूजादिसत्कर्ममहिम्ना इह जन्मनि गुरुकटाक्षव-

शादेवंविधषट्स्थलब्रह्मज्ञानं कश्चिदेव लब्ध्वा मुक्तो भवतीति नूनं. अथोक्तलक्षणषट्स्थलब्रह्मविच्छरणस्य गोप्यादिसद्यांतषण्मुखसमुदितज्योतिर्बिंद्वर्धचंद्रकुंडलदंडतारकाकारषडक्षराण्येव षड्भूतानि भूत्वांऽगतामभजन्. इति तदंगे षट्प्रणवरूपेष्टलिंगं सुस्थिरमासे तत्पीठे ह्याचारलिंगं, खंडिकावरणे गुरुलिंगं, वर्तुले शिवलिंगं, गोमुखे जंगमलिंगं, योनिस्थाने प्रसादलिंगं, गोलके महालिंगं, इत्येवं षड्विधलिंगानां प्रकाशमानत्वात्. तत्र भक्तस्तावदाचारलिंगस्य क्रियाशक्तियुक्तस्य श्रद्धाभक्त्या सुचित्तहस्तेन गंधपदार्थं धृत्वा नकारमंत्रमनुस्मरन् घ्राणेंद्रियमुखे समर्प्य तत्प्रसादभोगी भूत्वा परिणामी भवति. महेश्वरो हि गुरुलिंगस्य ज्ञानशक्तियुक्तस्य नैष्ठिकाभक्त्या सुबुद्धिहस्तेत रसपदार्थं धृत्वा मकारमंत्रमनुस्मरन् रसनेंद्रियमुखे समर्प्य तत्प्रसादं स्वीकृत्य परिणामी भवति. प्रसादी तु शिवलिंगस्य इच्छाशक्तियुक्तस्य सावधानभक्त्या निरहंकारहस्तेन रूपपदार्थं परिगृह्य शिकारमंत्रमनुस्मरन् नेत्रेंद्रियमुखे समर्प्य तत्प्रसादभोगी भूत्वा परिणामी भवति. प्राणलिंगी तु औन्मुख्यशक्तियुक्तस्य जंगमलिंगस्य अनुभावभक्त्या सुमनोहस्तेन स्पर्शपदार्थं धृत्वा वाकारमंत्रमनुस्मरन् त्वगिंद्रियमुखे समर्प्य तत्प्रसादभोगी भूत्वा परिणामी भवति. शरणस्तु पराशक्तियुक्तस्य प्रसादलिंगस्य आनंदभक्त्या सुज्ञानहस्तेन शब्दपदार्थं धृत्वा यकारमंत्रमनुस्मरन् श्रोत्रेंद्रियमुखे समर्प्य तत्प्रसादं भुक्त्वा परिणामी भवति. ऐक्यस्तु, चिच्छक्तियुक्तस्य महालिंगस्य समरसभक्त्या सद्भावहस्तेन तृप्तिपदार्थं धृत्वा प्रणवमंत्रमनुस्मरन् मनोमुखे समर्प्य तत्प्रसादतृप्तः सन् परिणामी भवति. एवं समर्पितवतः शरणस्य ज्ञप्ते ब्रह्मणि विश्रमितत्वात् "ओंकारो वदनं देवि नमःकारौ भुजद्वयम् ॥ शिकारो देहमध्यस्तु वायकारौ पदद्वयम् ॥ पीठं पादादिजान्वंतमानाभेर्मध्यमीरितम् ॥ हृदयांतं वर्तुलं स्यात्कंठांतं गोमुखं तथा ॥ भ्रूमध्यांतं लिंगकंठो मस्तको लिंगमस्तकः ॥ इति वचनात् तच्छरीरस्यापि मंत्रलिंगरूपत्वात्, आचरणीयं किमपि नास्त्येव. तथापि, लिंगांगसामरस्यप्रकारो विभावनीयः ॥ तथाहि ॥ पृथ्वी भक्तांगं भूत्वा तत्रैव लीना भवति. चिद्धृतिरूपत्वात् वारि महेश्वरांगं भूत्वा तत्रैव लीनं. चिदाप्यायनरूपत्वात्. तेजः प्रसाद्यंगं भूत्वा तत्रैव लीनं. चिदुज्ज्वलनरूपत्वात्. वायु

प्राणलिंग्यंगं भूत्वा तत्रैव लीनः स्वतंत्रतालक्षणस्पंदनरूपत्वात्. व्योम शरणांगं भूत्वा तत्रैव लीनं चिद्व्याप्तिरूपत्वात्. वेद्यसंस्कारात्मकबिंदुर्हि ऐक्यांगं भूत्वा तत्रैव लीनः।एवं भक्तस्याचारलिंगांगत्वात्, स तत्रैव लीनः।गुरुलिंगांगत्वात्, महेश्वरस्य स तत्रैव लीनः। प्रसादी शिवलिंगांगत्वात्, स तत्रैव लीनः। प्राणलिंगी जंगमलिंगांगत्वात्,स तत्रैव लीनः। शरणः प्रसादलिंगांगत्वात्, स तत्रैव लीनः। ऐक्यो हि महालिंगांगत्वात्, स तत्रैव लीन इति विमर्शनीयम् ॥

अथाचारलिंगं गुरुलिंगे, गुरुलिंगं शिवलिंगे, शिवलिंगं जंगमलिंगे, जंगमलिंगं प्रसादलिंगे, प्रसादलिंगं महालिंगे, महालिंगं घनलिंगैकलोलीभूतं सदखंडामर्शपरिबृंहितं सदास्ति. लिंगषट्कस्य चिदानंदप्रतिफलनकलनात्मकत्वादिति ॥

एवंविधलिंगांगसामरस्यं विवर्तवादे न संभवति,मानसादिभूस्यंतप्रमेयषट्कस्याविद्याकार्यत्वेन मिथ्यात्वादिति विमर्शनीयं. एवंविधषट्स्थलज्ञानवानेव सर्वोत्कृष्टः उक्तं च शांकरसंहितायां ॥ "क्रिमिकीटपतंगेभ्यः पशवः प्रज्ञयाऽधिकाः॥ पशुभ्योऽपि नराः श्रेष्ठास्तेषु श्रेष्ठा द्विजातयः ॥ द्विजातिष्वधिका विप्रा विप्रेषु क्रतुबुद्धयः ॥ क्रतुबुद्धिषु कर्तारस्तेभ्यः संन्यासिनोऽधिकाः ॥ तेभ्यो विज्ञानिनः श्रेष्ठास्तेषु शंकरपूजकाः ॥ तेषु श्रेष्ठा महाभाग मम लिंगांगसंगिनः ॥ लिंगांगसंगिष्वधिकः षट्स्थलज्ञानवान् भवेत् ॥ तस्मादभ्यधिको नास्ति त्रिषु लोकेषु सर्वदा" ॥ इति अत्र ब्राह्मणस्य लिंगधारणं कथमश्रौतत्वादिति नाशंकनीयं "पाणिमन्त्रं पवित्रं" स्यादिति श्रुतिविनिर्णय इति तत्रैवोक्तत्वात् "त्रियंबकं यजामह" इति श्रुतत्वाच्च. यजदेवपूजासंगतिकरणदानेष्विति धातोः लिंगांगसंबन्धस्य प्राप्तत्वादिति संक्षेपः ॥

अयमपरो विशेषः उक्तविधषट्त्रिंशत्तत्त्वात्मकस्य विश्वस्य "विद्यासु श्रुतिरुत्कृष्टा रुद्रैकादशिनी श्रुतौ॥ तत्र पंचाक्षरी तस्यां शिव इत्यक्षरद्वयं" ॥ इति पौराणिकोक्तेः, शिव इत्यक्षरद्वयस्य जीवरत्नत्वात्. तदंतर्भावप्रकारोऽपि विमर्शनीयः॥ ननु तत्त्वानामसाधारणलक्षणं विना तत्प्रतिज्ञानासंभवात् कथं तदंतर्भावप्रकारो विमर्शनीय इति चेदुच्यते. अत्रोक्तलिंगतत्त्वेषु सादाख्यानां नामधेयमात्रत्वात्, कलानां विमर्शांशत्वात्, लिंगानां प्रकाशांतर्गतत्वात्, तदेकरूपमेव. एवं च विमर्शप-

रिवृंहितं ब्रह्मैव स्वक्रीडार्थं लीलया शिवशक्तिसदाशिवेश्वरशुद्धवि-द्यामायाकलाविद्यारागकालनियतिपुरुषप्रकृत्यहंकारबुद्धिमनःश्रोत्र-त्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगंधा-काशवायुवन्हिसलिलभूमय इति षट्त्रिंशत्तत्त्वात्मना भिद्यते. तथाहि। "अनादिनिधनाच्छांताच्छिवात्परमकारणात् ॥ इच्छाशक्तिर्विनिष्क्रांता ततो ज्ञानं ततः क्रिया ॥ तयोत्पन्नानि भूतानि भुवनानि चतुर्दश"॥ इत्यागमोक्तेः ॥ "अर्धं क्रिया भवति दक्षिणमन्यदर्धं ज्ञानं समत्वमनयोरपि मध्यमिच्छा ॥ इच्छैव मूलमुदितांतरबाह्यगत्या ज्ञानं क्रिया च खलु मूलमिहांकुरस्य" ॥ इति मातृकाचक्रविवेकस्थितेश्च. सृष्ट्युन्मुखस्य महेश्वरस्य स्वेच्छाशक्त्यंतरंगभूतज्ञानांशप्रविष्टप्रथमोद्योग एव भाविचराचरप्रपंचनिमित्तकारणं सर्वज्ञसर्वकर्तृनीलकंठोमापतित्रिलोचनत्वादिलक्षणं शिवतत्त्वमिति. इदमेव ईशानमंत्रप्रतिपाद्यसदाशिव तत्त्वं ॥ "ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोमिति" श्रुतेः अस्यायमर्थः ॥ सर्वविद्यानां चतुःषष्टिकलानां ईशानः अधिपतिः, अनेन सर्वज्ञत्वमुक्तं. सर्वभूतानां भवनशीलानां चराचरप्राणिनामीश्वरः नियामकः एतेन सर्वकर्तृत्वमुक्तं. ब्रह्माधिपतिः ब्रह्मणां तत्पुरुषादिसद्योजातांतानां ईशरुद्रविष्णुब्रह्मणां तिरोधानादिकृत्यचतुष्टयनियमितानां अधिपतिः तज्जनकत्वेन तन्नियामकः, ब्रह्मणोऽधिपतिः ब्रह्मणः तपसः अधिपतिः ब्रह्मा परमानंदपरिवृंहितः, शिवः स्वच्छप्रकाशः, वशकांताविति धातोः ॥ "अथ वाऽनंतकल्याणगुणैकनिधिरीश्वरः ॥ शिव इत्युच्यते सद्भिः शिवतत्त्वार्थवेदिभिः" ॥ इति पौराणिकोक्तेः, कल्याणगुणपरिपूर्णो वा सदाशिवः, सत् आ शिवः इति विच्छेदेन सच्चिदानंदरूपः, आकारस्य आनंदवाचकत्वात्, प्रणवैकलोलीभावेन प्रतीयमानत्वात्, तत्प्रतिपाद्यः प्रणवांशीभूताकारस्य प्रातिलोम्येनोमायां प्रतीयमानत्वात्, तत्पतिश्च एवंभूतः सदाशिवः मे मम तिरोधानकलानिष्ठहृदयस्य अस्तु अनुग्रहप्रदो भवत्विति. एतन्मंत्रांतरगतत्वेन शैवसप्ताक्षरी स्फुरतीति विमर्शनीयं. इदमेव सर्वैश्वर्यविश्रांतिस्थानरूपं परमशिवस्य उपचारात् तत्त्वेषु परिगणनामात्रं. इदमेव मुमुक्षूपास्यं एतत्प्रसादेनैव परशिवैक्य

लोलीभावलक्षणा परममुक्तिरित्यवगंतव्यं. अयमेव जगद्गुरुः " ईशानः सर्वविद्यानां स एवादिगुरुर्बुधाः ॥ तस्य शिष्यो महाविष्णुर्दिव्यज्ञानमहोदधिः " ॥ इति पौराणिकोक्तेः नारायणाविर्भावकारणं च, अथ स्वेच्छाशक्तेः बहिरंगरूपक्रियांशप्रविष्टोद्योग एव, भाविविश्वोपादानकारणं शक्तितत्त्वं भवति. एतत्पुंभावविलास एव नारायणः अथैवंविधशक्तितत्त्वमेव स्वेच्छाशक्त्यंतरंगभूतज्ञानशक्त्युद्रेकावस्थाप्रविष्टं सत् जलाधिवासितचणकादिवत् पूर्वावस्थावैलक्षण्येनांकुरायमाणेदंताप्रथमरूपं गर्भावरकवत् स्वाहंतयाऽऽच्छाद्य वर्तमानविश्वस्फुरणरूपं सादाख्यरुद्रतत्त्वं सदाशिवांशीभूतं.अथ तच्छक्तितत्त्वमेव,स्वक्रियाशक्त्युद्रेकदशायां प्रविष्टं सत्कृतवस्तुवदंकुरितमिदंतारूपं स्वाहंतयाऽऽच्छाद्य स्थितविश्वस्फूर्तिमयमीश्वरतत्त्वं, शक्तितत्त्वपुंभावलीलास्वरूपनारायणाख्यं.अथ क्रियाप्रधानेदंतायाः संविद्रूपाहंतांतर्गततत्त्वेन भासमानत्वात्, विभागनिबंधनभेदघटितसागरतरंगन्यायेनाहंतेदंतयोरैक्यप्रतिपत्तिर्ब्रह्मापरपर्यायशुद्धविद्यातत्त्वं भवति. गुरुशास्त्रलब्धनिर्मलसंवित्तिरितीति यावत्. अथैवंविधशुद्धविद्यातत्त्वमेवांडरसन्यायेन स्वांतर्लीनेषु भवनक्रियोन्मुखेषु भावेषु अन्योन्याभावनिबंधनभेदबुद्धिप्रधानं सत् मायातत्त्वं भवति ॥ " कलासप्तदशी देवी स्वांतर्लीनचराचरेति " आगमोक्तेः ॥ " इदं सर्वं जगत्पूर्वं प्रलये परमेश्वरे ॥ मायाभिन्ने स्वमायाख्यकारणाभेदरूपतः ॥ वर्तते वासनारूपेणैव नाभावरूपतः " इति पराशरोपपुराणवचनाच्च, स्वांतर्लीनचराचरात्परमेश्वरात्, काष्ठयोगेन वन्हेर्विस्फुलिंगाविर्भाववत् तदिच्छाशक्तिवशाद्विभक्तः सन्, उक्तलक्षण मायाशक्तौ प्रतिबिंबगत्या प्रविष्टो यः प्रकाशः, स पुरुषतत्त्वं भवति. अस्य स्वतंत्रप्रकाशमहेश्वराद्विच्छिन्नत्वेन मायाक्रांतत्वात्, नाहमीश्वर इत्यात्मन्यनात्मताज्ञप्तिराविर्भवति. तथैवानात्मनि देहादावात्मताज्ञप्तिश्च, एतद्द्वयमाणवं. तत एव शुभाशुभवासनारूषितकार्ममलमन्योन्याभावभेदलक्षणमायिकमलं च प्राप्तं भवति. एवंविधमलत्रयशृंखलितत्वादेव, संसारीत्युच्यते. अस्य पुरुषस्य महेश्वराद्विभक्तत्वेन मायापहृतैश्वर्यत्वात्, असंकुचिततत्कर्तृताशक्तिरेव किंचित्कर्तृतालक्षणकलातत्त्वं भवति. ज्ञातृताशक्तिरेव किंचिज्ज्ञत्वलक्षणमविद्यातत्त्वं भवति. पूर्णताशक्तिरेवापूर्णतां प्राप्य स्रक्चंदनवनितादिविषयासक्तिलक्षणरागतत्त्वं

भवति. तथा नित्यतां ह्यनित्यतां प्राप्य, भूतभविष्यद्वर्तमानरूपक्रमाकारकालतत्त्वं भवति. तथा, व्यापकतां ह्यव्यापकतां प्राप्य, मयेदं कर्तव्यमिति, नियमहेतुभूतनियतितत्त्वं भवति. एवंविधकलादिपंचकमस्य पुरुषस्य शंकरशासनादपरिच्छिन्नस्वस्वरूपावरणहेतुत्वात्कंचुकमित्यागमेषूच्यते. अथौन्मुख्यगर्भितेच्छाशक्तिरेव,प्रतिस्फुरणगत्या स्वगतज्ञानक्रियान्योन्याभावलक्षणमायाप्रतिस्फुरणरूपसुखदुःखमोहप्रदसत्वरजस्तमसां साम्यावस्थालक्षणमहंकारादिभूम्यंतत्रयोविंशतितत्त्वमूलकारणं, प्रकृतितत्त्वं भवति. अथ,अहं ममेदमित्यभिमानसाधनमहंकारतत्त्वं भवति. निश्चयहेतुर्बुद्धितत्त्वं भवति. स्थाणुर्वा पुरुषो वेति संकल्पविकल्पसाधनं मनस्तत्त्वं, समीचीनकल्पस्थाणुत्वबुद्धेर्विपरीतत्वात्पुरुषत्वबुद्धेर्विकल्पत्वं, एतत्रितयं शरीरांतःस्थित्वा, सुखादिवेद्यावधानकरणरूपत्वादंतःकरणं, इच्छाशक्तिप्रधानं. अथ शरीरबाह्यलग्नं सत् शब्दज्ञानैककरणं श्रोत्रं, स्पर्शज्ञानैककरणं त्वक्, रूपज्ञानैककरणं चक्षुः, रसज्ञानैककरणं रसनं, गन्धज्ञानैककरणं घ्राणं, एतत्पंचकं ज्ञानशक्तिप्रधानत्वात् ज्ञानेंद्रियमित्युच्यते. अंतःकरणस्य शब्दाशब्दादिसाधारणत्वादेतस्य शब्दाद्यसाधारणत्वात् नातिव्याप्तिः। अथोच्चारणक्रियाहेतुर्वाक्, दानादानादिक्रियाहेतुः पाणिः, गमनागमनक्रियासाधनं पादं,भुक्तजीर्णमलपरित्यागसाधनं पायुः,रेतोमूत्रपरित्यागक्रियासाधनमुपस्थकं, एतत्पंचकं क्रियाशक्तिप्रधानत्वात् कर्मेंद्रियमित्युच्यते. एतत्करणचतुर्दशकमिच्छाज्ञानक्रियात्मकमित्यवगंतव्यं. अथ श्रोत्रैकवेद्यः शब्दः, त्वगेकवेद्यः स्पर्शः, नेत्रैकवेद्यं रूपं, रसनैकवेद्यो रसः, घ्राणैकवेद्यो गन्धः, एतेषां ध्वनिवर्णशीतोष्णनीलपीतमधुराम्लसुरभ्यसुरभित्वादिविभागशून्यत्वेन सामान्यरूपत्वात्तन्मात्ररूपत्वेन व्यपदेशः। अथ मरुदग्न्यंबुभूमीनामवकाशप्रदं शब्दैकगुणकमाकाशं, कम्पभ्रमणशोषणवेगवान् स्पर्शैकगुणो वायुः, दाहकं पाचकं रूपवत्तेजः, अंतश्चंद्रादिशीततेजसि दाहकत्वाभावेपि सस्यादिवर्धनरूपपाचकत्वस्थितेर्नाव्याप्तिः। द्रावकं प्लावकमाप्यायकं रसैकगुणकं सलिलं, गंधैकगुणकं जलतत्त्वाधारकं छेद्यं पाच्यं भूतत्त्वमिति एतान्याकाशादीनि महाभूतानीत्युच्यंते. अत्रैवंविधषट्त्रिंशत्तत्त्वेषु शिवादिशुद्धविद्यांतमंकुरायमाणांकुरितविश्वरूपत्वादपरं, तस्याहंतयेच्छादितत्त्वात्परं. एवं परापरं मोक्षहेतुत्वात्तुरीं

सागरतरंगन्यायेनाभेदपर्यवसायिविभागनिबन्धनभेदबुद्धिप्रधानरूपत्वात्,मायातत्त्वस्य बंधहेतुत्वात्,स्थूलविश्वमयत्वाच्च. अपरं अन्योन्याभावनिबन्धनभेदबुद्धिरूपत्वात्, अत्र मनोबुध्यहंकारप्रकृतिसहितपुरुषाय श्रोत्रादिभूम्यंतविंशतितत्त्वानि जाग्रदवस्थाप्रविष्टानि,स्पर्शवाच्यत्वात् कलादिपंचकं स्वप्नदशाप्रविष्टं. अंतःस्थितत्वेन तद्वाच्यत्वात्, मायैका सुप्तिदशातत्त्वं. मोहरूपत्वादिति विवेकः. ननु "पंचविंशतिरात्मा भवति" इति श्रुतेः, तत्त्वानां पंचविंशत्या परिमितत्वात्कथं षट्त्रिंशद्रूपत्वमिति चेन्न इत्थं षोडशपदार्थानां सप्तपदार्थांतर्भाव इव, तथाहि कलादीनां मायाकार्यत्वेन मायादिषट्कंचुकस्यापि कंचुके पुरुषांतर्गतत्वात्, मायादिनियत्यंतस्य तत्कंचुकत्वेन तदंतर्गतत्वात्, प्रकृत्यादिमानसांतचतुष्टयस्य तदंतःकरणरूपत्वात्, प्रकृतेश्चित्तापरपर्यायत्वात्। श्रोत्राद्युपस्थांतानां तदीयज्ञानकर्माक्षरूपत्वात्, तन्मात्रपंचकस्य तद्भोज्यरूपत्वात्, भूतपंचकस्य तच्छरीरत्वात्,शिवादिपंचकस्य तूष्माक्षरवाच्यत्वात्,ऊष्मणां शक्तिरूपत्वात्,शक्तीनां परमशिवस्वभावत्वेन तदीयशुद्धानुसंधानरूपत्वेन तदेकरूपत्वान्न विरोध इति विवेकः ॥

एवंविधषट्त्रिंशत्तत्त्वात्मकं विश्वं ॥ "शिवो वा प्रणवः प्रोक्तः प्रणवो वा शिवात्मकः॥ वाच्यवाचकयोर्भेदो नात्यंतं भिद्यते क्वचित्"॥ इति पौराणिकोक्तेः; "सदाशिवोमिति" श्रुतेः "अहमित्यक्रमाक्रांतजगत्त्रितयमंडलः॥ वर्तते देवि वीरेंद्र इति शांभवनिर्णयः"॥ "अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः॥ इकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः ॥ अनयोः समरसाकारादहमित्येव निर्मलः"॥ इत्यागमोक्तेः, "अहमस्मि प्रथमजेत्यादिश्रुतेश्च" मूलप्रणवैकविग्रहकपूर्णाहंतात्मकशिवे मयूरांडरसन्यायेन सामरस्येन संक्षिप्तं. तथाहि शिव इत्यत्र वर्णचतुष्टयस्य भासमानत्वात् त्रिंशिकाशास्त्रस्थित्या वकारस्य मायातत्त्ववाचकत्वात्, मायांतैकत्रिंशत्तत्त्वानि तद्वाचककादिवांताक्षराणि च वकारांतर्गतानि कलादिभूम्यंतत्रिंशत्तत्त्वानां तत्कार्यत्वात् "वाय्वग्निसलिलेंद्राणां धारणानां चतुष्टयम्" इत्युक्तत्वात्, शुद्धविद्यादिशक्त्यंततत्त्वचतुष्टयं तद्वाचकशवर्गश्च शकारेंऽतर्भूतः "तदूर्ध्वं शादिविख्यातं पुरस्ताद्ब्रह्मपंचकम्" इत्युक्तत्वात्, अकारे त्वनुग्रहात्मकषोडशकलापरिपूर्णसदाशिवतत्त्वं. तत्कलावाचकषोडशस्वरा-

श्रांतर्गताः । शकारमस्तकस्थितेकारे त्वेतत्करणीभूततच्छक्तिश्चकास्ति. अनुत्तरादिषट्स्वरशक्तिष्विकारस्येच्छाविधानात्, समष्ट्या परमशिव इति विश्वं शिवाद्वैतकल्पपादपमंजरीरूपं विमर्शनीयं. ॥

एवमहमित्यत्रापि अत्र मकारस्य पुरुषतत्त्ववाचकत्वात् ॥ " पृथिव्यादीनि तत्त्वानि पुरुषांतानि पंचसु ॥ क्रमात्कादिषु वर्गेषु मकारांतेषु सुव्रत " ॥ इत्युक्तत्वात्, मायांततत्त्वानि पुरुषेंतर्गतानि. " पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान् गुणान् " ति गीतत्वात्. अन्यत्सर्वं पूर्ववत्. कारणीभूता शक्तिस्तु हकारादेव तस्य विमर्शवाचकत्वात्, तथा प्रदर्शितत्वात्.एवमोमित्यत्रापि तस्याकारोकारमकाररूपत्वात् उकारस्य हकारसूक्ष्मत्वेन त्रिशिकातत्त्वविवरणे प्रकटीकृतत्वात्. अन्यत् पूर्ववत्. एवमों शिवोहमेकार्थविश्रांतत्वेन मातृकासंग्रहरूपत्वे श्रौतत्वाच्च. महेश्वरप्रतिपादकत्वेन च महामंत्ररूपत्वात्, मुमुक्षुरेवंविधानुसंधानवानेव भवेत्. " तमेव विद्वानमृत इह भवति " इति श्रुतेः एवमुक्तक्रमेण शिवसूत्रसंप्रतिपन्नदृक्क्रियात्मकचैतन्यप्रतिपादकब्रह्मसूत्रषट्स्थलब्रह्मषट्त्रिंशत्तत्त्वमहामंत्रपरिज्ञानवान् इह जन्मनि अस्मिन्नेव देहे अमृतो भवति. आहारव्यवहारादिना लौकिकवद्वर्तमानोऽपि जन्मांतराभावाज्जीवन्मुक्तः ॥ पिंडपातानंतरं सर्वज्ञतादिशक्तीनां विकासात्, साक्षान्मुक्तो भवतीति नूनं. ननु अस्य मंत्रस्य पुरुषसूक्तांतर्गतत्वात्, इतः पूर्वं दृक्क्रियात्मकचैतन्यस्य षट्स्थलब्रह्मणः षट्त्रिंशत्तत्त्वानां महामंत्रस्य चाप्राप्तत्वात्, कथमुक्तार्थसिद्धिरिति चेत् "सहस्राक्ष" इति "स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशांगुलं ॥ उतामृतत्वस्येशानः एतावानस्य महिमा अतो ज्यायांश्च पूरुषः " इति श्रुतत्वात्, सहस्राक्षत्वप्रकटनेन ज्ञातृताशक्तेः;ईशानइत्यंतेन विश्वतदुत्तीर्णतया भवनमोक्षकर्तृतालक्षणक्रियाशक्तेः, एतावानस्य महिमेत्यनेन जडजीवलक्षणज्ञानक्रियास्वतंत्रचैतन्यस्य चोपात्तत्वात्, अतो ज्यायानित्युक्तत्वात् ॥ " चैतन्यं दृक्क्रियारूपं शिवस्य परमस्य यत् ॥ स्वातंत्र्यमेतदेवात्मा ततोऽसौ परमः शिवः " ॥ इति शिवसूत्रवार्तिकस्थितेः तदेकार्थत्वात् " पादोऽस्य विश्वाभूतानीति " श्रुतेः षट्त्रिंशत्तत्त्वानां तदंतर्गतत्वात् " त्रिपादस्यामृतं दिवि त्रिपादूर्ध्वमुदैत्पुरुष इति " श्रुतत्वेन षट्स्थलब्रह्मणां महामंत्रतमस्य च प्राप्तत्वात्, अथैवंविधपरामर्शवतः आलाप एव जप-

तत्प्रवृत्तिरेव व्रतं, कथा जपः, शरीरप्रवृत्तिर्व्रतमिति शिवेन सूचितत्वात् तस्मात्सर्वस्यापि शिवाक्षरचतुष्टयसंपन्नत्वात्, शिवम् ॥

इति श्रीप्रकाशविमर्शसामरस्यलक्षणद्वैताद्वैतसमरस-
लीलासपरिवृंहितब्रह्मविद्याचार्यनाथानंदमुनींद्रचं-
द्रसूक्तिसुधाकिरणप्रसरणविकसितहृत्कैरव-
कोरकस्वप्रभानंदविरचितेयं शिवाद्वैत-
मंजरी संपूर्णतामवाप्ता पूर्णिमाचं-
द्रिकेव सहृदयहृदयाल्हादनं
वितन्वती विजयतेतरां
स्वस्ति श्रीः ॥



# स्थलादर्शपट.

- स्थल ( ब्रह्म )
  - लिंगस्थल ( ईश )
    - भावलिंगस्थल. ( ईश्वर )
      - प्रसादलिंगस्थल.
      - महालिंगस्थल.
    - प्राणलिंगस्थल. ( हिरण्यगर्भ )
      - शिवलिंगस्थल.
      - चरलिंगस्थल.
    - इष्टलिंगस्थल. ( विराट् )
      - आचारलिंगस्थल.
      - गुरुलिंगस्थल.
  - अंगस्थल ( जीव )
    - योगांगस्थल. ( प्राज्ञ )
      - शरणस्थल.
      - ऐक्यस्थल.
    - भोगांगस्थल. ( तैजस )
      - प्रसादिस्थल.
      - प्राणलिंगिस्थल.
    - त्यागांगस्थल. ( विश्व )
      - भक्तस्थल.
      - महेशस्थल.


शक्ति.
भक्तिशक्ति.
श्रद्धाभक्ति.
नैष्ठिकाभक्ति.
अवधानभक्ति.
अनुभवभक्ति.
आनंद्भक्ति.
समरसभक्ति.
कलाशक्ति.
क्रियाशक्ति.
निवृत्तिकला.
ज्ञानशक्ति.
प्रतिष्ठाकला.
इच्छाशक्ति.
विद्याकला.
आदिशक्ति.
शांतिकला.
पराशक्ति.
शांत्यतीताकला.
चिच्छक्ति.
शांत्यतीतोत्तराकला.

# लिंगांगसामरस्यसद्भावदर्शक पट.

| लिंग. | मुख. | शक्ति. | तत्त्व. | ज्ञानांग. | कर्मांग. |
|---|---|---|---|---|---|
| महालिंग. | हृदय. | चिच्छक्ति. | शिवतत्त्व. | हृदय. | हृदय. |
| प्रसादलिंग. | श्रोत्र. | पराशक्ति. | सादाख्यतत्त्व. | श्रोत्र. | वाक्. |
| चरलिंग. | त्वक्. | आदिशक्ति. | अमूर्ततत्त्व. | त्वक्. | पाणि. |
| शिवलिंग. | नेत्र. | इच्छाशक्ति. | मूर्ततत्त्व. | नेत्र. | पाद. |
| गुरुलिंग. | जिव्हा. | ज्ञानशक्ति. | कर्तृतत्त्व. | रसना. | उपस्थ. |
| आचारलिंग. | नासिका. | क्रियाशक्ति. | सकलतत्त्व. | नासिका. | पायु. |

| अंगस्थल. | भक्ति. | हस्त. | अर्पण. | प्रसाद. | अंग. | अवस्था. | शरीर. |
|---|---|---|---|---|---|---|---|
| ऐक्यस्थल. | समरसभक्ति. | भावहस्त. | स्मर्तव्यपदार्थ. | परिणामप्रसाद | आत्मा. | सुषुप्ति. | कारणशरीर. |
| शरणस्थल. | आनंदभक्ति. | ज्ञानहस्त. | श्राव्यपदार्थ. | शब्दप्रसाद. | व्योम. | | |
| प्राणलिंगिस्थल. | अनुभवभक्ति. | मनोहस्त. | स्पृश्यपदार्थ. | स्पर्शप्रसाद. | वायु. | स्वप्न. | सूक्ष्मशरीर. |
| प्रसादिस्थल. | अवधानभक्ति. | अहंकारहस्त. | द्रष्टव्यपदार्थ. | रूपप्रसाद. | अग्नि. | | |
| महेशस्थल. | नैष्ठिकाभक्ति. | बुद्धिहस्त. | रस्यपदार्थ. | रसप्रसाद. | जल. | जागृति. | स्थूलशरीर. |
| भक्तस्थल. | श्रद्धाभक्ति. | चित्तहस्त. | घ्रेयपदार्थ. | गंधप्रसाद. | भूमि. | | |

ॐ

श्रीमते रेणुकाचार्याय नमः

# अथ शैवसिद्धांतदीपिकानाम

## पाशुपतमतप्रकरणम्

अवर्णविग्रहं देवं वर्णविग्रहवर्जितं ।
वर्णविग्रहचक्कारं नमामि स्तौमि संश्रये ॥ १ ॥
चराचरात्मकं विश्वमोतप्रोतं च सर्वतः ।
पशुपाशभिदा येन नमस्तस्मै पुरद्विषे ॥ २ ॥

इह तावज्जातिकुलाद्यभिमानास्पदमिदं स्थूलदेहं पृथिव्यप्तेजोवाय्वाकाशानां समवायः। तत्र प्राक्तनपुण्यपापानुकूलं ब्राह्मणादिवर्णांश्च रूपश्रियाविंद्रियपाटवमपि बिभ्रतो नियतायुषो नियतभोगाश्च भवन्ति भोक्तार आत्मानः। एतेषां भोगपरिकरीभूतानि सृष्टिमारभ्यानीतानि पृथिवीतत्त्वमारभ्य कलातत्त्वान्तानि त्रिंशत्तत्त्वानि आत्मन्यात्मनि पृथक्पृथक् अत्यंतसूक्ष्मस्य कर्मणा प्राप्तस्यायुषोऽन्ते पूर्वशरीरं विहाय तृणजलूकवदाश्रयिष्यत्यपरं शरीरं तेन कृतानां पुण्यपापानामाश्रय आत्मा, शरीरादन्यः ज्ञानक्रियारूपः, नित्यः अमूर्तः व्यापकश्च आणवकार्ममायीयवैंदवरोधशक्त्यात्मकपाशपंचकबद्धः संसारी पुरुषः।

अस्य भोगपरिकरीभूतसूक्ष्मशरीरभूततत्त्वानि कानीति चेत् पृथिव्यप्तेजोवाय्वाकाशतत्त्वानीति कथितानीमानि भूतानि पंच एतेषां कारणं तन्मात्रपंचकं किमिति चेत्? गंधतत्त्वं, रसतत्त्वं, रूपतत्त्वं, स्पर्शतत्त्वं, शब्दतत्त्वं चेति एतद्दशकं कार्यमित्युच्यते। वाक्पाणिपादपायूपस्थानीति पंच कर्मेंद्रियाणि एतेषां गुणा वचनगमनादानविसर्गानंदाः। श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानीति पंच ज्ञानेंद्रियाणि, एतेषां गुणाः शब्दस्पर्शरूपरसगंधाः। एतस्य वागादिपंचकस्य श्रोत्रादिपंचकस्य च करणमित्यभिहितं। मनश्चाहंकारश्च बुद्धिश्चेति त्रितयमेतत् श्रोत्रादींद्रियवदस्माच्छरीराद्बहिर्निर्गत्य व्यापारमकृत्वाऽस्य शरीरस्यान्तरवकाशे स्थित्वा क्रियाप्रवर्तकत्वात् अंतःकरणमित्येतेषां त्रयाणां नाम। अर्था-

नां संकल्पनं च श्रोत्रादींद्रियाणां बाह्यविषयेषु प्रवर्तनं च मनसो वृत्तिः। अभिमानकल्पनं च प्राणादिवायूनां प्रेरणं च अहंकारवृत्तिः। अध्यवसायो बुद्धेर्वृत्तिः। एतद्रजतमेव न शुक्तिरिति निश्चयोऽध्यवसाय इति। पूर्वमुक्तानि त्रयोविंशतितत्त्वानि एतेष्वध्यवसायकारणभूताद्बुद्धितत्वात् सात्विकराजसतामसभेदेन भिन्नोऽहंकारो जायते। अत्र सात्विकाहंकारान्मनश्च श्रोत्रादिपंचज्ञानेंद्रियाणि च जायन्ते। अत्र राजसाहंकाराद्वागादिपंचकर्मेंद्रियाणि जायन्ते। अत्र तामसाहंकाराद्गंधादितन्मात्रकं जातं। एतस्मात्तन्मात्रपंचकाद्भूतानि पंच जातानि। धारणा च समूहीकरणं च दाहकत्वं च अवयवघटनकरणं च इतरभूतचतुष्टयस्यावकाशदानं च पंचभूतानां वृत्तयः। अत्र पृथिव्याः शब्दस्पर्शरूपरसाः सामान्यगुणाः गंधस्त्वसामान्यगुणः। अपां शब्दस्पर्शरूपाणि सामान्यगुणाः रसस्त्वसामान्यगुणः। तेजसः शब्दस्पर्शौ सामान्यगुणौ, रूपं चासामान्यगुणः। वायोः शब्दः सामान्यगुणः, स्पर्शस्त्वसामान्यगुणः। आकाशस्य शब्द एक एव गुणः। अयं शब्दः प्रतिध्वनिर्वर्णात्मको न भवति। द्वाविंशतेः परस्य बुद्धितत्त्वस्य कारणं गुणतत्त्वं। एतच्च सत्वमिति च रज इति च तम इति चाभिहितं। त्रिधाभूय क्रमेण सुखदुःखमोहानां च कारणं भवति। अस्य गुणतत्त्वस्य कारणं प्रकृतितत्त्वं गुणतत्त्वं चतुर्विंशतितत्त्वं, प्रकृतितत्त्वं पंचविंशतितत्त्वं एतास्मिन्नुभयस्मिंस्तत्त्वे प्रकृतितत्त्वस्य कार्यं गुणतत्त्वमिति प्रतिपादितं। गुणतत्त्वस्य कार्यं सुखदुःखमोहहेतुत्वं च स्वव्यतिरिक्तार्वाग्बुध्यादित्रयोविंशतितत्त्वानां क्रमेण कारणं च पृथिवीतत्त्वमारभ्य प्रकृतितत्त्वान्तपंचविंशतेः अशुद्धाध्वेति नाम।

इत ऊर्ध्वं रागतत्त्वं, अस्य वृत्तिः प्रकृतिजातवस्तूनामात्मने प्ररोचनं। अत ऊर्ध्वं नियतितत्त्वं, अस्य वृत्तिः आत्मनः स्वेन स्वेनैव कृतानि कर्माणि आत्मनैव भोक्तव्यानीति नियमनं। इत ऊर्ध्वं कालतत्त्वं, अस्य वृत्तिः दीर्घकालं भुंक्ते स्वल्पकालं भुंक्त इति पुरुषस्य भोगपरिच्छेदः। अतःपरं विद्यातत्त्वं अस्य वृत्तिः विषयोपरक्तां बुद्धिं पुरुषे गृण्हातीति करणभूतत्त्वं। अस्मात्परं कलातत्त्वं अस्य वृत्तिः आत्मनोऽनादिभूततामकालिकावत्सहजमलशक्तेरेकदेशमपसार्य आत्मस्वरूपस्य प्रकाशनं। अस्य कारणं मायातत्त्वं। पूर्वोक्तप्रकृतितत्त्वरागतत्त्वविद्यातत्त्वाना-

मुत्पत्तिः कलातत्त्वे। नियतिकालकलातत्त्वानामुत्पत्तिर्मायातत्त्वे कलातत्त्वविद्यातत्त्वकालतत्त्वनियतितत्त्वरागतत्त्वानि पंचकंचुकमित्युच्यते। एतेनावृतस्य बोध्यात्मनः पुंस्त्वमिति मलस्य सद्भावात्पुरुषतत्त्वमिति व्यपदेशः अत आत्मनो जडरूपत्वं। रागतत्वमारभ्य कलातत्वान्तानि पंचतत्वानि मिश्राध्वेत्युच्यन्ते।

एतान्येकत्रिंशत्तत्त्वानि। आत्मन्यात्मनि पार्थक्येन सूक्ष्मदेहानि भवन्ति। एतेषां कार्याणां भुवनशरीराणामाश्रयिणां भुवनानामाश्रयाणां सर्वात्मनां साधारणानि त्रिंशत्तत्त्वानि। एतेषां सर्वेषां कारणमशुद्धमायातत्त्वं। इदं मायातत्वं नित्यं व्यापकं समस्तात्मकर्मसंबद्धं। स्ववृत्तिद्वारेण ज्ञानक्रियाप्रकाशीभवदपि मोहकं। इतःपरं द्वात्रिंशकं विद्यातत्त्वं इतःपरं त्रयस्त्रिंशकमीश्वरतत्त्वं। अस्मिन् शुद्धविद्यातत्त्वे सप्तकोटिमहामंत्राः। श्रीमत्कामिकाद्यष्टाविंशतिसंहिताश्च नंद्यादयोऽष्टौ गणेश्वराश्च सिद्धान्तशास्त्रेण पूज्यमानाः इंद्रादिलोकपालाश्च एतेषामायुधानि वज्रादीनि च वसन्ति। ईश्वरतत्त्वे विद्येश्वराः अनंतादयोऽष्टौ वर्तन्ते। एतेष्वनंतः सर्वेश्वरत्वात् तेषां विद्येश्वराणां विद्यातत्त्ववासिनां चान्येषां चेश्वरभूतो मायाक्षोभकश्च मायीयतत्त्वभुवनानां स्रष्टा च। किंचायं परमेश्वराद्भिन्नः एकमलयुक्तश्च मलपाकेन परमेश्वरेणानुगृहीतश्च भवति अनेन सृष्टिरूपेणाणवकार्मबंधद्वयवंतः प्रलयाकला इत्यभिहिते आत्मराशौ मलपाकवन्तो निरधिकरणेनैव परमेश्वरेणानुगृहीता अष्टादशाभ्यधिकं शतरुद्राः सन्ति। एतेषु श्रीकंठसंज्ञो रुद्रो मध्यप्रलयान्ते प्रकृतितत्त्वादर्वाक्तत्त्वेषु भुवनानां च स्रष्टा, आणवकार्ममायीयात्मकबंधत्रितयेन युक्तानां सकलनाम्नामात्मनां राशौ ज्ञानयोगतपोऽध्ययनादिभिर्विशिष्टश्च ब्रह्मविष्णुपदयोर्निर्वाहकश्च भवति। अस्य मध्यप्रलयसमये रागतत्त्वेऽवस्थानं। पश्चात्सृष्टिकाले प्राप्ते अशुद्धाध्वसृष्टिपूर्वं ब्रह्मविष्णुसृष्टीनामधिष्ठाता स्थित्वा अतोऽर्वाक्तनभुवनेश्वरांश्च त्रयस्त्रिंशत्कोटिदेवांश्च ब्रह्मांडानि च सृजति ब्रह्मांडं चतुर्दशभुवनं सकलानां प्रजानामावासभूमिः। पूर्वोक्तरुद्रेषु शतरुद्राः पांचभौतिकब्रह्मांडं विना केवलपृथिवीतत्त्वे स्थित्वा ब्रह्मांडस्य रक्षका भवन्ति। गुणतत्त्वे ब्रह्मविष्णुभ्यां सह स्थितो रुद्रभट्टारको मध्यप्रलयपर्यंतमधिकारं कृत्वा इमौ ब्रह्मविष्णू चोपसंहृत्य स्वयं मिश्राध्वरागतत्त्वे

वर्तते अनेन सह वीरभद्रदेवश्च वर्तते । प्रकृतिमस्तकेऽष्टौ कलामस्तकेऽष्टौ च श्रीकंठवीरभद्रौ च शतरुद्राः । एवमष्टादशाभ्यधिकं शतरुद्राः परमेश्वरेणानुगृहीतशरीरिणो भवन्ति । ब्रह्मविष्णुपदस्थितिजनन्नानादिभिरस्पृष्टाः ब्रह्मविष्ण्वादिपदान्यात्मकर्तृकज्ञानयोगबलेन संपादयन्ति । एतेषामष्टादशशतरुद्राणां मलपाकात्परमेश्वरप्रसादाच्च दीक्षापूर्वकं क्रमेण पदप्राप्तिः । शुद्धविद्यातत्त्ववासिनां मलपाकात्परमेश्वरप्रसादाच्च पदप्राप्तिः । एतेषां विद्येश्वराणां स्वरूपं वैन्दवं अष्टादशाधिकशतरुद्राणां शरीरं मायीयं । ब्रह्मविष्ण्वादीनां शरीरं प्राकृतं, अष्टादशशतरुद्राणां विद्येश्वराणां च स्वरूपमिव साक्षात्परमेश्वरस्य सकलानि स्वरूपाणि पूजादिषु ध्येयानि । ब्रह्मविष्णुशरीरस्य प्राकृतत्वात्परमेश्वरानुग्रहपूर्वमसंभवत्वाच्च ब्रह्मविष्णुशरीरवत् परमेश्वरः केनापि न ध्यायते । ब्रह्मविष्णुपदमुभयं पशुभूमिः । रुद्रपदमीश्वरपदमुभयं पतिभूमिः । अस्मादीश्वरतत्त्वादुपरि सदाशिवतत्त्वं । अतःपरं शक्तितत्त्वं । अतऊर्ध्वं शिवतत्त्वं । एतत्तत्त्वत्रितयं परमेश्वरस्य अधिकारभोगलयतत्त्वसंज्ञानिमित्तं, एतस्मिंस्तत्त्वत्रितये परमेश्वराद्व्यतिरिक्तानि कर्तृभूतान्यात्मान्तराणि न विद्यन्ते । लयभोगाधिकारपदानि श्रद्धधानाः साधकदीक्षया दीक्षिता मंत्रसाधकाः पश्चात्परमेश्वरप्रसादेन तत्तद्भुवनं प्राप्य भोक्तारो वैराग्यपर्यंतं वा महासंहारपर्यंतं वा स्थित्वा विद्येश्वरवन्मुक्ताश्चिदात्मानो न भवन्ति । विद्यातत्त्वे अकारादिक्षकारान्तपंचाशदक्षराणि कामिकाद्यष्टाविंशतिसंहिताश्च वैखरीरूपाणि वर्तन्ते ईश्वरतत्त्वे प्रणवश्च । सदाशिवतत्त्वे सकलो बिन्दुः सकलो नादश्च । शक्तितत्वे सूक्ष्माभिधेयबुद्धिबीजमात्मन्यात्मनि पृथक्पृथग्भूत्वा सूक्ष्मनादात्मकं पुर्यष्टकं तिष्ठति । शिव तत्त्वस्य कारणं बिंदुश्च बिंदोः शिवतत्त्वस्य च तत्वभेदव्यपदेशो नास्ति । सदाशिवशक्तितत्त्वेऽधिष्ठाय स्थितस्य शिवस्य सकलः सकलनिष्कलः निष्कलः व्यक्तः व्यक्ताव्यक्तः अव्यक्तः महेश्वरः सदाशिव इति च नामानि । एतेषु षट्त्रिंशत्तत्त्वेषु बिंदुर्नित्यो व्यापकोऽमूर्तः परमेश्वरस्य नित्याधिष्ठेयः शब्दार्थात्मकः नादादिद्वारेणात्मनां सम्यग्ज्ञानस्य कारणं । अमोहकश्च भवति । मायाव्यतिरिक्तसमस्तवस्तूनामुपादानं जडश्च पृथ्वीतत्त्वमारभ्य शिवान्तानि षट्त्रिंशत्तत्त्वानि तत्त्वाध्वा । कालाग्निभुवनमारभ्य

अनाश्रितभुवनपर्यंतानि भुवनानि द्विशतं पंचत्रिंशद्भुवनाध्वा। अकारादिक्षकारान्तानि पंचाशदक्षराणि वर्णाध्वा। व्योमव्यापिमन्त्रात्मानः एकादशीति पदाध्वा। मूलब्रह्मांडरूपाणि एकादशमंत्राध्वा। निवृत्त्यादिपंचकलाध्वा। एतेषु कलातत्त्वभुवनात्मानस्त्रयोऽध्वानो द्रव्यात्मकाः वर्णपदमंत्रात्मानस्त्रयोऽध्वानः शब्दरूपाः। एतेषु भुवनाध्वा तत्त्वाध्वानमाश्रित्य वर्तते। तत्त्वाध्वा कलाध्वानं वर्णपदमंत्रात्मकास्त्रयोऽध्वानो भुवनजशरीरापेक्षया वर्तन्ते। एतेषां षडध्वानां परमकारणं वस्तु कुंडलिनीति च शुद्धविद्येति च ब्रह्मेति चोच्यते। एते षडध्वान आत्मनां संसारः षडध्वव्यतिरिक्ता नित्या व्यापकाश्चेतनाः प्रतिशरीरं भिन्ना मलिनाः कर्मकर्तारः कर्मफलभोक्तारः किंचिज्ज्ञाः किंचित्कर्तारः सेश्वराश्च भवन्त्यात्मानः। एते वंधभेदेन सकलप्रलयाकलविज्ञानाकला इति त्रिविधा उच्यन्ते। एतेषामात्मनां मायीयबंधः कलादिपृथिव्यंततत्त्वभुवनभौवनादिरूपः। काम्यबंधो ज्योतिष्टोमब्रह्महत्यादिभिरुत्पन्नः अपूर्वाख्यसंस्काररूपः पुर्यष्टकमध्यगतबुद्धितत्त्वमाश्रित्य सुखदुःखमोहात्मकफलश्च भवति। मलाख्यो वंधः आत्मनां स्वरूपज्ञानक्रियावारकः आत्मन्यात्मनि पृथक्पृथग्भूत्वा स्वकालान्ते व्यापयिष्यदनेकशक्तिसहितो नित्यो व्यापको जडद्रव्यं च भवति। वैंदवो बंधो विद्याविद्येश्वरादिशरीराणां कारणं सकलाख्यसंसारिभोगपरिकरीभूतसूक्ष्मादिवैखर्यन्तशब्दहेतुश्च रोधशक्त्यात्मकः पाशो मायीयकार्माणववैंदवपाशचतुष्टयस्यानादिधर्महेतुश्च शिवशक्तिरेव उपचारात्पाश इत्युच्यते। शुद्धाध्ववर्तिनां वैंदवो रोधशक्तिश्चेति पाशद्वयमेव। मिश्राध्ववर्तिनां तु एतद्वयं चाणवः कार्मिकश्चेति पाशचतुष्टयं। अशुद्धाध्ववर्तिनां तु एतच्चतुष्टयं मायीयश्चेति वंधाः पंच। एतेषु त्रिष्वध्ववर्तिषु शुद्धाध्ववासिनां मुक्तानामिव निरतिशयसुखमेव दुःखस्पृष्टाः सुखदुःखमोहाश्च न सन्ति। अतो हेतोरयं शुद्धाध्वेत्यभिधीयते। मिश्राध्ववासिनां तु सर्वज्ञतायामपि सुखदुःखमोहाश्च सन्ति। अतो हेतोरयं मिश्राध्वेत्यभिधीयते। अशुद्धाध्ववासिनां तु किंचिज्ज्ञत्वं किंचित्कर्तृत्वं च सुखदुःखमोहाश्च सन्ति। अतो हेतोरयमशुद्धाध्वेत्यभिधीयते। अत्र वैंदवो मायीयश्च पाशावागंतुकौ। कार्मपाशस्तु प्रवाहानादिर्भोगावसाधनः। आणवपाशस्तु कूटस्थानादिः स्वपाकान्ते परमेश्वरप्र-

सादात्मिकया दीक्षया निवर्त्यः। कार्मपाशस्तु विज्ञानयोगसंन्यासैर्वा भोगेन वा क्षीयते.।

एते ज्ञानादयः शास्त्रद्वारा संपद्यन्ते तानि शास्त्राणि पंचविधानि लौकिकं वैदिकमाध्यात्मिकमतिमार्गिकं मांत्रं चेति. लौकिकं तु आयुर्वेददंडनीत्यादिदृष्टफलं शास्त्रं। वैदिकं तु वेदेषु क्रियाभागमुद्दिश्य ऋषिभिर्ज्योतिष्टोमादिपुण्यप्रतिपादकस्वर्गादिसाधकमीमांसाशास्त्रं । वेदविषये पौरुषेयसाधके पदार्थप्रमाणयोः परीक्षां कर्तुमृषिभिः प्रणीते न्यायवैशेषिके शास्त्रे च, एतत्रितयं दृष्टादृष्टफलं शास्त्रं।

आध्यात्मिकं तु सांख्यपातंजलवेदान्ताख्यान्युपनिषद्भागमुद्दिश्य ऋषिभिः प्रणीतानि आत्मज्ञानफलानि शास्त्राणि। अतिमार्गिकं तु शास्त्रं रुद्रप्रणीतानि पाशुपतकापालमहाव्रतानि । मांत्रं तु शिवप्रणीतं सिद्धान्तशास्त्रं।

मीमांसाशास्त्रस्य कर्ता भगवान् जैमिनिः अनेन शास्त्रेण प्रतिपाद्यमानोऽर्थो--वाक्यलक्षणं च वेदा अपौरुषेया इति च प्रपंचो नित्य इति च इष्टं पूर्तं कर्मानुष्ठेयमिति च कर्मानुष्ठानमेवानुष्ठातुः स्वर्गादिसाधनमिति च भौतिकशरीरेंद्रियेभ्यः अन्ये आत्मानः एते चानेके एतेभ्यो विलक्षण ईश्वरो न कश्चिदिति च।

वैशेषिकशास्त्रेण तु प्रतिपाद्यमानोऽर्थः पृथिव्यप्तेजोवायव इति भूतानि चत्वार्यनित्यानीति च एतेषां कारणानि तत्तन्नामानो भिन्नाः परमाणव इति च एतेभ्योऽन्यच्छब्दकारणं नित्यं पंचममाकाशात्मकं भूतमिति च एतस्मादन्यो नित्यः कालो दिशश्च एतेभ्यो भूतकारणशरीरेंद्रियेभ्योऽन्ये अमूर्ता नित्याः। आत्मानोऽनेके एतेभ्यो व्यतिरिक्तं ज्ञानादिहेतुकं नित्यं मनश्च आत्मन्यात्मन्यभिधीयमानानि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसीति नव द्रव्याणि द्रव्यपदार्थः एतेभ्यो व्यतिरिक्तः रूपादिर्गुणपदार्थः एतस्मादन्य उत्क्षेपणादिकर्मपदार्थः अतोऽन्यो गोत्वादिः सामान्यपदार्थः इह घटे शौक्ल्यमित्यादिः समवायपदार्थः एतेभ्यः पंचेभ्योऽन्यो विशेषपदार्थः एतेषु षट्सु आत्मनः पदार्थतत्त्वस्य मनःसंयोगात् ज्ञानमुत्पद्यते अनेन पुण्यापुण्यात्मककर्मानुष्ठानमुत्पद्यते। अनेन पापात्पापात्मककर्मानुष्ठानमुत्पद्यते अनेन शरीरेंद्रियाणि च पुण्यापुण्यवशेन स्वर्गनरकप्राप्तिः सर्वस्यास्य निर्वाहक

ईश्वरः अस्य मनःसंयोगात् ज्ञानादेरुत्पत्तिर्न किंतु स्वभावसिद्धं ज्ञानं। इत्थं पदार्थानां षण्णां साधर्म्यवैधर्म्यज्ञानेन कर्मक्षयो भवति मनःसंयोगजनितज्ञानं विना पाषाणकल्पा वर्तन्ते अयमेव मोक्ष इति च वेदा ईश्वरकर्तृका इति च।

न्यायशास्त्रेण तु प्रतिपाद्यमानोऽर्थः—प्रत्यक्षादिप्रमाणानि प्रमेयासिध्यर्थं ज्ञेयानीति च वैशेषिकोक्तक्रमेणैव पदार्था एते षोडशविधा इति च मोक्षलक्षणं च एतदुक्तप्रकारमिति च ईश्वरः पदार्थतत्त्वस्य च ज्ञानचिकीर्षाप्रयोक्ता नित्य इति च, एतच्छास्त्रद्वयप्रणेतारौ कणादाक्षपादौ च।

सांख्यशास्त्रेण तु प्रतिपाद्यमानोऽर्थः--नित्या व्यापिका जडरूपा समस्तवस्तूनां कारणं सत्त्वरजस्तमसां साम्यावस्थाऽमूर्ता च प्रकृतिरियं प्रकृतिश्चतुर्विंशतितत्त्वमिति च। एतत्कार्यं बुद्धितत्त्वमारभ्य पृथ्वीतत्त्वान्तानि त्रयोविंशतितत्त्वानीति च, एवंभूतचतुर्विंशतितत्त्वेभ्योऽन्ये नित्याः व्यापकाः अमूर्ताः नानाविधाः सर्वकर्तृत्वसर्वज्ञत्वरहिताः ज्ञानमात्राः आत्मानः। एवं पंचविंशतितत्त्वनीति च, पंचभौतिकशरीरे बुद्धितत्त्वमेव प्रधानं एतेषां मुक्तिदशायां संसारदशायां च निर्विशेषं स्वरूपं अशुद्धिर्नास्तीति च अनादिसिद्धायाः बुद्धिगतायाः अविद्याया वशात्सांसारिकसुखदुःखज्ञानमुत्पद्यते इति च। प्रकृतिपुरुषविवेकज्ञानादविद्याया विनाशे मोक्ष इति च आत्मभ्योव्यतिरिक्त ईश्वर इति च न कश्चिदिति च एतच्छास्त्रप्रणेता कपिलः।

पातंजलशास्त्रेण तु प्रतिपाद्यमानोऽर्थः—इत्थं प्रकृतिप्राकृते च आत्मानश्च वंधमोक्षौ च संति। विवेकज्ञानवद्योगश्च योगपरिकर इति च षड्विंशतितत्त्वमीश्वर एकः अस्यात्मभ्यो विशेषः स्वाधीनतानिर्माणं चित्तमित्याख्यावत् केवलसत्वरूपधारणं च आत्मज्ञानोपदेष्टृत्वं चेति च एतच्छास्त्रप्रणेता पातंजलिः।

वेदान्तशास्त्रेण तु प्रतिपाद्यमानोऽर्थः--भास्करीया मायावादिनः शब्दब्रह्मवादिनः क्रीडाब्रह्मवादिनश्चेति चतुर्विधा वेदान्तवादिनः। एतेषु भास्करीयाः जडाजडात्मकं सुरनरतिर्यगादिको वस्तुराशिरखिलो ब्रह्मपरिणामः एतद्ब्रह्मसच्चिदानंदात्मकं व्यापकं च एतदेवेश्वरो भवति अस्य विकारत्वस्याज्ञानात्परिवर्तते संसारः। अयमेक एव परमार्थतः

सत्यं, अस्य विकाराणां च विकारत्वाद्वेदान्तज्ञानेन शरीरव्यतिरिक्तमात्मस्वरूपं भासते तत्परब्रह्मैवेति वेदनीयो मोक्ष इति च प्रतिपादयन्ति

मायावादिनस्तु पूर्वोक्तपरब्रह्मैव परमार्थदृश्यमानोऽन्यो खिलः शठः सत्यां शुक्तिकायां रजतवज्जगदुपादानं मायेयं ब्रह्मवत्सत्या च न भवति। शशविषाणवदसत्या च न भवति। मायाविलक्षणं ब्रह्मस्वरूपं वेदान्तज्ञानेन स्वयमिति वेदनं मोक्ष इति प्रतिपादयन्ति।

शब्दब्रह्मवादिनस्तु—कारणं ब्रह्मपरमं प्रमेयदशायां शब्दात्मकं भवति। अस्य विकारो जडाजडात्मकं समस्तवस्तु विनाश्यविनाशि वस्तुतः शब्दात्मैव तदेव स्वरूपं भवतीति वेदनं मोक्ष इति च प्रतिपादयन्ति।

क्रीडाब्रह्मवादिनस्तु—पूर्वोक्तब्रह्मैवाहं अहं एकाकी भवामि अहं मयैवोत्पन्नैरुच्चावचैर्विकारवस्तुभिः सह बहुधा क्रीडामीत्यभिसंधिना बहुधा भवति बहु तद्वस्तु नित्यं तत्सत्यं वस्तु स्वयमित्युपलब्धिर्मोक्ष इति च प्रतिपादयन्ति एतेषां मतानां प्रणेता व्यासः।

मीमांसावैशेषिकन्यायसांख्यपातंजलवेदान्ता इति षट् शास्त्राणि वैदिकानि एतेषु वेदान्त एक एव अद्वैतशास्त्रमितराणि पंच भेदशास्त्राणि एतत्षट्कं विना वेदबाह्यानि नास्तिकशास्त्राणि।

तानि शास्त्राणि कानीति चेत् बौद्धमार्हतं लोकायतिकं चेति त्रीणि एतेषु लोकायतिकशास्त्रेण तु प्रतिपाद्यमानोऽर्थः-प्रत्यक्षपृथिव्यप्तेजोवायव एवं सत्याः एतेषां समुदायः शरीरमेवात्मा भवति एतदात्मज्ञानं देहवृद्धौ वृद्धं स्यात् क्षीणे क्षीणं स्यादिति ईश्वर इति न कश्चिद्दृष्टः, सुखदुःख एव स्वर्गनरकौ शरीरे नष्टे कर्तव्यं किमप्यदृष्टं नास्ति अत एव शरीरं विना आत्मेति कश्चित् न दृष्ट इति। लोकायतिकशास्त्रप्रणेता बृहस्पतिः।

बौद्धशास्त्रेण तु प्रतिपाद्यमानोऽर्थः—पृथिवीतत्त्वमारभ्य बुद्धितत्त्वान्तत्रयोविंशतितत्त्वानि सन्ति एतेषु बुद्धितत्त्वं प्रधानं। पंचभौतिकशरीरे बुद्धितत्त्वमेवात्मा भवति। तदेवप्रधानं। एतद्बुध्दितत्त्वमारभ्यार्वाग्ववस्तुराशिरखिलः क्षणिकः अन्यथा स्थिर आत्मा च ईश्वरश्चेत्येतदुभयं नास्ति। एतच्छास्त्रोपदेष्टा सुगत एवोपास्यः। मोक्षस्तु जलप्रवाहवदनित्यानुभूयमानाज्ञानसंततिः। सुखदुःखस्पर्शं विना शुध्दचित्संततिरेव स्यादिति केचित् क्रमात्क्रमात्प्रवर्तमानो दीपः क्षीणयो-

स्तैलवर्त्यौर्यथा नश्यति तद्वद्ज्ञानसंततिनाश एव मोक्ष इति केचित्। एते सौत्रांतिका वैभाषिका योगाचारिका माध्यमिका इति चतुर्विधा भवन्ति एतेषु केचित्प्रत्यक्षोऽखिलो वस्तुराशिरसत्यो ज्ञानसंततिरेव सत्येति च। केचिदयमखिलो वस्तुराशिरस्ति अपि तु क्षणिक इति च प्रतिपादयन्ति।

आर्हतैस्तु प्रतिपाद्यमानोऽर्थः—आर्हतशास्त्रप्रणेता अर्हन्नेवानादिसिध्दो जीव इति कोऽपि पदार्थोऽनादिमोहादिदोषसहितो वर्तत इति चान्यानींद्रियाण्यपि सन्तीति च एतत्सर्वमेतन्नामभिः सहैवास्ति कायो नास्ति काय इति शब्देन वक्तव्यः। एतत्पदार्थानामहिंसैवास्ति नास्ति काय इति शब्देन वक्तव्यं। अर्हदुक्तशास्त्रज्ञानेन चैतच्छास्त्रोक्ततप्तशिलाशयनादितपोभिश्च जिनानामहिंसया चास्य दोषाः क्षीयन्ते। एवमर्हन्निव क्षीणदोषो भवति चैतानि शास्त्राणि सन्ति न वेति पृछ्यमाने सन्तीति च न सन्तीति च नोच्यन्त इति चैतत्त्रयं वेदवाह्या ईश्वर इत्येक अनादिगतस्थैर्यो न, आचारविहीनाश्च नास्तिका उच्यन्ते।

वैदिकशास्त्राणि षट्। तेषामुत्पत्तिभूता ऋग्यजुःसामाथर्वणा इति वेदाश्चत्वारः एतेषामंगानि छंदःकल्पशिक्षाव्याकरणनिरुक्तज्योतींषीति षट् मंत्ररूपेण ब्राह्मणरूपेण विधिरूपेण च ब्राह्मणादिवर्णधर्माणां ब्रह्मचर्याद्याश्रमधर्माणां प्रतिपादनं च उपनिषद्भागैः प्रकृतिपुरुषेश्वरप्रतिपादनं च वेदानां प्रमेयार्थाः वेदसिध्दाचारस्य प्रवर्तकानि। शौचादेश्च व्यवहारस्य च प्रायश्चित्तस्य च नियामकानि मन्वादिधर्मशास्त्राण्यष्टादश। एतेषां प्रणेतारो मन्वादयो महर्षयः।

वासुदेवप्रणीतपांचरात्रशास्त्रेण तु प्रतिपाद्यमानोऽर्थः—सांख्योक्तचतुर्विंशतितत्त्वगुणतत्त्वोपरिपंचविंशतितत्त्वं वासुदेव इत्याख्यावन्न किमपि परतत्त्वं। एतस्मात्परतत्त्वात् कृष्णानिरुध्दमकरध्वजरौहिणेया इति चत्वारो व्यूहाः जगत्सृष्ट्यर्थमुत्पद्यन्ते। एतैश्चतुर्भिर्जडाजडात्मकं वस्तु समस्तं व्यज्यत इति च वेदान्तेषु परिणामवादिभिरुक्तवदेतदखिलं वासुदेव इति च। वेदेषु पुरुषार्था न सन्ति पांचरात्रेषु पुरुषार्थाः सन्ति। अतः पांचरात्रोक्तक्रमेण दीक्षयित्वा वासुदेवं समाराध्य वासुदेवस्वरूपे लयो मोक्ष इति च।

इतिहासपुराणैस्तु प्रतिपाद्यमानोऽर्थः—वैदिकधर्माणां च सांख्यपातंजलप्रतिपादितार्थानां च पांचरात्रपाशुपतशैवोक्तार्थानां च सृष्टिसंहारयोश्च वंशानां च मन्वंतराणां च वंशानुचरितानां च प्रतिपादनम्। इतिहासो महाभारतं पुराणान्यष्टादश। एतेषां कर्ता वेदव्यासः। पंचविंशतितत्त्वमात्मेति, षड्विंशतितत्त्वं रुद्र इति, सप्तविंशतितत्त्वं शिव इति, पदार्थान् विदित्वा दीक्षया मुक्ता भवन्तीति पुराणानां प्रमेयार्थः।

पाशुपतशास्त्रेण तु प्रतिपाद्यमानोऽर्थः—आत्मानो बहवो व्यापका नित्याः कार्यकारणसंयोगजाता ज्ञानात्परस्परं भिन्नाश्च एतेषामाणवमलं नास्ति मायामलेन कर्मपाशेन च बद्धाः सांसारिकसुखदुःखान्यनुभवन्ति वैराग्योत्पत्तौ शास्त्रोक्तक्रमेण दीक्षितेष्वात्मसु परमेश्वरस्य ज्ञानगुणः संक्रान्तो भवति। पुत्रेषु कुटुंबधुरं निधाय सन्यसन्त इव आत्मज्ञानं संक्रमय्य ईश्वरः स्वाधिकाराढुपरतो भवति।

महाव्रतेन तु प्रतिपाद्यमानोऽर्थः—पाशुपतोक्तक्रमेणैव आणवकार्म्यमायीयात्मकमलमुक्तानामात्मनां संसारदशायामपि ज्ञानशक्तिरेव न तु क्रियाशक्तिः शास्त्रोक्तक्रमेण दीक्षिता अस्थिधारिणः शास्त्रोक्तचर्यानुष्ठातारो मुक्ता भवन्ति च। ते च मुक्ताः केवलं ज्ञानशक्तिमन्त एव। ज्ञानक्रियाशक्तिद्वयं तु परमेश्वरस्यैकस्यैवेति।

कापालेन तु प्रतिपाद्यमानोऽर्थः—पाशुपतमहाव्रतोक्तक्रमेणात्मलक्षणं बंधलक्षणं चास्तीति च शास्त्रोक्तक्रमेण दीक्षितेन दिने दिने साम्यैकध्वजपताकाव्याप्तायां दिशि मनुष्यकपाले भिक्षामटता भोक्तव्यमिति च। महाव्रतानामिव मोक्ष इति च पाशुपतमहाव्रतकापालानां शास्त्राणां वक्तारो मायातत्त्वविद्यातत्त्ववासिनस्त्रयो रुद्रा अदृष्टशास्त्रभूतसिद्धान्तशास्त्रस्य इह लोके विश्वासजनकपरमेश्वरेण तत्पुरुषाघोरवामदेवसद्योजातनामभिः चतुर्भिरधोवक्त्रैरनुगृहीते विज्ञानकैवल्ये एतदेतत्संज्ञैश्चतुर्भिरात्मभिरुक्तानि गारुडदक्षिणवामभूतानीत्यधःस्रोतांसि चत्वारि शास्त्राणि। एतेषां गारुडतंत्रेण तत्पुरुषं ब्रह्मस्वरूपवध्यात्वा परमेश्वरः पूजनीय इत्युच्यते। अनेन शास्त्रेण प्रत्यक्षं सर्पचिकित्सार्थं मंत्रौषधानि चोक्तानि। दक्षिणतंत्रेण तु अघोरं ब्रह्मस्वरूपवध्यात्वा पूजनीयः परमेश्वर इति च। योगेन परमेश्वरः प्रत्यक्षीकार्य इति चोक्तं शत्रुजयाय मंत्रप्रयोगाश्च। वामतंत्रेण तु वामदेवं ब्रह्मस्वरू-

एवध्यात्वा पूजनीयः परमेश्वर इति स्त्रीवश्यार्थं मंत्रतंत्रौषधानि चोक्तानि। भूततंत्रेण तु सद्योजातं ब्रह्मस्वरूपवध्यात्वा परमेश्वरः पूजनीय इत्युक्तं भूतप्रेतपिशाचचिकित्सार्थं मंत्रौषधानि च शक्तितत्त्ववासिना केन चिदात्मना शाक्ततंत्रमुक्तम्। भास्करीयवेदान्तवादिप्रोक्तवज्जडाजडमखिलं शक्तिपरिणतिरित्येतत्तंत्रस्य मतं तान्यधःस्त्रोतांसि चत्वारि च साक्षाच्छिवप्रणीतानि भवन्ति। कौळादिशास्त्राणि मनुष्यैर्मच्छेंद्रनाथादिसिद्धैरुक्तानि। लोकायितज्ञानिनां पृथिव्यप्तेजोवायूनां चतुर्णां भूतानां ज्ञानेन तत्तत्त्वोद्भूतं जन्म विरमति। बौद्धानां बुद्धितत्त्वादर्वाक्प्रपंचजननं विरमति। आर्हतानां गुणतत्त्वादर्वाक्तत्त्वजन्म विरमति न्यायवैशेषिकयोर्बुद्धितत्त्वान्तसंसारसारो विरमति। सांख्यानां प्रकृतिपुरुषयोर्विवेकज्ञाने सत्यपि प्रकृतेरुपरि मिश्राध्वविषयतत्त्वज्ञानासंभवादशेषकर्मनाशानुत्पत्तेर्विज्ञानकैवल्यं नास्ति पांचरात्राणां प्रकृतेरर्वाक्संसारो विरमति। वेदान्तिनां पुरुषतत्त्वप्राप्तिः स्यात् पौराणिकानां रागतत्त्वप्राप्तिः स्यात्। कापालिकानां कालतत्त्वप्राप्तिः स्यात्। पाशुपतानां मायातत्त्वप्राप्तिः स्यात्। महाव्रतानां विद्यातत्त्वप्राप्तिः स्यात्। श्रोतोन्तरगारुडदक्षिणवामभूततंत्रेषु दीक्षितानां शक्तितत्त्वस्थितनिवृत्तिप्रतिष्ठाविद्याशांतिभुवनप्राप्तिः स्यात्। शुद्धशाक्तानां शक्तितत्त्वप्राप्तिः स्यात्। कौलयामळादिशास्त्राणां हिंसामैथुनसंगस्य संभवात् पिशाचपदप्राप्तिः स्यात्।

## सिद्धान्तशास्त्रं तु शिवभेदरुद्रभेदत्वेन द्विविधम्

बिंदुशक्तेर्नादबिंदुप्रणवात्मकायाः परिणतेरनंतरं मातृकाजन्यानुष्टुप्छंदोनिबद्धप्रणवादीनां मायोर्ध्वविज्ञानकेवलाख्यानां परमेश्वरेणानुगृहीतानां दशशिवानां कामिकादिसंज्ञया शब्दार्थात्मकसद्योजातवामदेवमुखाभ्यां प्रोक्तानि शिवभेदाह्वयानि शास्त्राणि दश।

एवं परमेश्वरेणोपदिष्टज्ञानानामष्टादशरुद्राणामघोरतत्पुरुषेशानवदनैर्विजयादिसंज्ञया प्रोक्तानि रुद्रभेदाह्वयानीत्यष्टादश शास्त्राणि।

एवमष्टाविंशतिशास्त्राणामेकैकस्यैककोटिसंख्ययाऽष्टाविंशतिकोटिग्रन्थाः एतेषामष्टाविंशतिशास्त्राणां सिद्धान्त इति नाम एतानि प्रत्येकं ज्ञानक्रियायोगचर्याभिश्चतुष्पादानि।

एतेषां ज्ञानपादेन तु—परमेश्वरस्वरूपं च विज्ञानाकलप्रलयाकलसकलानामात्मनां स्वरूपं च आणवकार्म्यमायीयवैंदवरोधशक्त्यात्मकपाशस्वरूपं च शक्तिरूपं च शिवतत्त्वमारभ्य पृथिवीतत्त्वांतषट्त्रिंशत्तत्त्वानां सृष्टिप्रकारश्च एतैरात्मनां भोगसाधनैर्भवितव्यं च भुवनानां भुवनेश्वराणां स्वरूपं च परमेश्वरमारभ्य भुवनानां योजनान्येतावंतीति च परिमाणानि च अधःप्रलयमध्यप्रलयमहाप्रलयानां स्वरूपं च तत्तत्प्रलयानंतरसृष्टिप्रकारश्च पाशुपतमहाव्रतकापालशास्त्रवक्तृकथनं च तत्तच्छास्त्रोक्तार्थं पूर्वपक्षीकृत्य प्रमेयनियमश्च प्रोच्यन्ते।

क्रियापादेन तु—मंत्रोद्धारसंध्यावंदनपूजाजपहोमाश्च समयविशेषनिर्वाणसंस्काराश्चाचार्याभिषेकश्च साधकाभिषेकश्चात्मनां भोगमोक्षोपायभूतदीक्षा च प्रोच्यन्ते।

योगपादेनतु—एतानि षट्त्रिंशत्तत्त्वानि च तत्त्वेश्वराश्च भुवनेश्वराश्च आत्मा च परमेश्वरश्च शक्तिश्च जगत्कारणभूतमायामहामाययोः प्रत्यक्षीभावश्च। ऐहिकतत्त्वसिध्यपेक्षिणामणिमादिसंभवश्च प्राणायामप्रत्याहारध्यानधारणसमाधिप्रकारश्च मूलाधाराद्याधाराणामवस्थानं च प्रोच्यन्ते।

चर्यापादेन तु—प्रायश्चित्तं पवित्रारोपणं प्रतिष्ठाश्च शिवलिंगलक्षणं च उमामहेश्वरादिव्यक्तलिंगलक्षणं च स्कंदनंद्यादिगणेश्वरलक्षणं च जपमालालक्षणं च अन्त्येष्टिश्राद्धानि च प्रोच्यन्ते समयसंस्कारेण रुद्रपदप्राप्तिः स्यात्। विशेषसंस्कारेणेश्वरपदप्राप्तिः स्यात्। प्रकृतितत्त्वादुपरि मिश्राध्वनि प्रथमतत्त्वभूतरागतत्त्वप्राप्तिरेवेश्वरपदप्राप्तिः। इयं सांख्यपातंजलवेदान्तपांचरात्रोक्तमोक्षादुपरि निर्वाणदीक्षया परमेश्वरसाम्यरूपमोक्षं प्रापयति सा च सद्योनिर्वाणासद्योनिर्वाणत्वेन द्विविधा सद्योनिर्वाणदीक्षया क्रियासमनंतरकाल एव शरीरं विहाय मोक्षं प्राप्नुवन्ति। असद्योनिर्वाणदीक्षा दीक्षाकाले भूतानि भविष्यन्ति च कर्माणि संशोध्य तदानीं संभुज्यमानस्य शरीरहेतुभूतस्य वर्तमानकर्मणः शुद्धीकरणादायुःक्षये शरीरत्यागेन मोक्षं प्रापयति।

साधकदीक्षा तु—शिवभक्तिशिवलिंगार्चनयोः सतोरपि पश्चाद्विद्येश्वरादिपदाभिलाषिणस्तत्तत्पदं प्रापयति तत्तत्पदप्राप्तास्ते च

यदि मध्ये विरक्तास्तदानीमेव मुक्ता भवन्ति नोचेन्महासंहारकाले मुक्ता भवन्ति।

निर्बीजदीक्षा तु—दीक्षोत्तरकाले अनुष्ठेयानां संध्यावंदनशिवलिंगार्चनादीनां दीक्षाकाल एवाचार्येण संशोध्यानुष्ठितत्वात् स्त्रीबालवृद्धव्याधितराज्ञां विधेया।

सबीजदीक्षा तु—समर्थानां पुत्राणामाचार्यैर्विधेया। दीक्षया भूतभविष्यद्रूपाणि द्विविधानि कर्माणि च एतत्परिपाकप्राप्तान्यशेषशरीराणि च शरीरभोगाश्च नश्यन्ति। शरीरकारणभूतानां कर्मणां शुध्दीकरणाच्छरीराणि सुखदुःखान्यनुभवितव्यान्येव. इत्थं त्रिविधकर्म विनश्यति। स तु दीक्षाया उपरि मरणान्तमुच्यमानशास्त्रीयनियमा वर्तमानशरीरकारणभूतकर्मणः सहकारिमलशुध्द्यै ज्ञानानि योगाश्च तपांसि च बुध्यादिसाधनैः साध्यानीत्युक्तत्वादेभिर्न मोक्षः। किंतु परमेश्वरप्रसादात्मिकया दीक्षयैव मोक्ष इतरैर्नास्ति। दीक्षोत्तरकाले आचार्यवैकल्ये बुध्दिपूर्वकस्य दोषस्य प्रायश्चित्तेन शुध्दिः स्यात्। मंत्रद्रव्यलोपादेश्च पवित्रारोपणेन शुध्दिः। अबुध्दिपूर्वकस्य नियमलोपस्यान्तेष्ट्या शुध्दिः। दीक्षोत्तरकालेऽवश्यानुष्ठेयानि कर्माणि यमनियमसंपत्तिः शैवसंध्यावंदनं शिवलिंगार्चनं शिवाग्निकार्यं गुरुवचनपालनं यथाशक्ति माहेश्वरपूजा च।

अननुष्ठेयानि कर्माणि तु—अन्यदैवनिर्माल्यभक्षणं शिवनिंदा च शिवभक्तनिंदा शिवशास्त्रनिंदा च शिवशास्त्रप्राप्ताचारनिंदा च देवद्रव्योपभोगश्च भूतहिंसा च एवं दीक्षितस्योक्तानुष्ठानवतो मुक्तस्यात्मनो लक्षणं आणवकार्म्यमायीयवैंदवरोधशक्त्याख्यपाशपंचकाद्विमुक्तश्च परमेश्वरवत्सर्वज्ञता नित्यतृप्तताऽनादिसिद्धबोधता स्वतंत्रता अलुप्तशक्तिताऽनंतशक्तिमत्ताच एवं विधानामप्यात्मनां परमेश्वरवत्सृष्ट्यादिकर्तृत्वं नास्ति विषयानंदसद्भावश्च रागद्वेषादीनां विद्यमानता च सृष्ट्यादेरकर्तृतायाः कारणं पंचविधकृत्येन तु परमेश्वर एव परानुग्रहं करोति। "इति सर्वमतोत्कृष्टा शैवसिद्धान्तदीपिका। सर्वार्थशंभुदेवेन कल्पिता शैवसंमता" ॥

शैवसिद्धान्तदीपिकानाम पाशुपतमतप्रकरणं समाप्तम्।

## डिव्हिजनल इन्स्पेक्टर ऑफ ॲग्रिकल्चर पुणें ह्यांनीं विलायती भुईमुगाच्या पेरणीसंबंधी दिलेली माहिती.

जमीन भुसभुशीत असावी. मध्यम, काळ्या रेंसवट व तांबूस माळरानांत हें पीक चांगलें येतें. जमीन एकदोन वेळ नांगरून, कुळवून व खत घालून तयार करावी. निदान एकरीं दहा ते पंधरा गाड्या कुजलेलें शेणखत घालावें.

पहिल्या दोनतीन पावसांनीं जमीन चांगली भिजली ह्मणजे नांगरीनें अगर एडताकानें ( हें कुळव्यासारखें असतें पण याचें दिंड हलकें असून, काकऱ्या पाडण्यासाठीं यास भुईमुगाचे जातीप्रमाणें जवळ अथवा दूर फण बसविलेले असतात. ) काकऱ्या पाडून खालीं लिहिलेल्या दराप्रमाणें निरनिराळ्या जातीचें बीं पेरावें.—

| जातीचें नांव. | दाणे दर एकरीं पौंड (१ पौंड=३९॥ तो.) | सरींत अंतर इंच. | दाण्यांत अंतर इंच. |
|---|---|---|---|
| मोठाजपानी व्हर्जीनिया | ७९–१०० | १२ | ९ |
| पांदेचेरी.. .... | ८९ | ९ | ६ |
| लहान जपानी ( तांबड्या दाण्याचा ) | | | |
| स्पॅनिश भुईमूग .... | २०० | ६ | ४ |

पेरणी झाल्यावर फराटीनें बीं चांगलें झाकावें. पुढें भुईमूग फुलण्याचे सुमारास दोनतीन भांगलणी द्याव्यात. पानें पिंवळीं पडलीं व शेंगा जमिनींत तयार झाल्या, टरफलें टणक झालीं व शेंगाचे दाणे वाळले ह्मणजे पीक तयार झालें असें समजावें. जिराईत भुईमूग कुळवानें काढतात; बागाईतास जमीन भारी असल्यास, नांगरीनें अगर कुदळीनें काढावा लागतो.

सातारा, कोल्हापूरकडे भुईमुगाचें पीक पावसावर येतें. अहमदनगरकडे त्यास पाणी देतात; तथापि तिकडे देखील लौकर येणारे जातीस ह्मणजे लहान जपानी व स्पॅनिशपीजट यांस फार पाणी द्यावें लागणार नाहीं. कारण त्या जाती तीन किंवा चार महिन्यांतच तयार होतात. आणि बाकीच्यांस चार किंवा पांच महिने लागतात; तरी पण त्या देशी भुईमुगाच्या आधीं एक महिना तयार होतात. शेंगा तयार झाल्यावर त्यास पाणी देऊं नये.

डिव्हिजनल इन्स्पेक्टर ऑफ ॲग्रिकल्चर.

# विक्रीस तयार.

## श्रीमंत रावसाहेब मल्लप्पा बसप्पा वारद यांच्या वीरशैवलिंगिब्राह्मणधर्मग्रंथमालेंतील मराठी भाषांतरासह असलेल्या संस्कृतग्रंथांची यादी.

| | रु.आ.पै. |
|---|---|
| वीरशैवसदाचारसंग्रह | ०-१२-० |
| सिद्धांतशिखामणि | ३- ०-० |
| व्यासोक्त बसवेश्वरपुराण | ३- ०-० |
| वीरशैवाचारप्रदीपिका | २- ०-० |
| हरिहरतारतम्य | ०- ४-० |
| विशेषार्थप्रकाशिका | ०- ७-० |
| रामायणसारसंग्रह | ०-६-० |
| उपयुक्त वेंचे | ०- ७-० |
| विरक्तोत्पत्तिक्रिया (कानडी) | ०- ४-० |
| पारमेश्वरागम | २- ०-० |
| कैवल्यसार | ०-१०-० |
| प्रभुलिंगलीला | ३-१२-० |
| पंचाचार्यपंचमोत्पत्तिप्रकरण | ० ६-० |
| वीरमाहेश्वरप्रकरण | ०- ८-० |
| दीक्षादिकथन | ०- २-० |
| सूक्ष्मागम | ०-१०-० |
| वीरशैवलिंगिब्राह्मणवंशावलिपट | ०-१-० |
| व्यापारसाम्राज्य पूर्वार्ध | १- ०-० |
| शिवपर अभंग | ०- ७-० |
| शिवोत्कर्षकीर्तनतरंगिणी | ०-१४ ० |
| वीरमाहेश्वराचारसंग्रह | ५- ४-० |
| मराठी सिद्धरामेश्वर चरित्र | ०- ७-० |

| | रु.आ.पै. |
|---|---|
| वीरशैवदीक्षाविधि | |
| वीरमाहेश्वरदीक्षाविधि | ०- १-० |
| शिष्यवर्गसंप्रदायनिरूपण | ०- १-० |
| शिवपुराणवायवीयसंहिता | ४- ०-० |
| भारतसारसंग्रह | ०- ६-० |
| वीरशैवखानेसुमारी | ०- १-० |
| अनादिवीरशैवसारसंग्रह | ३- ०-० |
| वीरशैवमतसंवर्धिनी | ०- २-० |
| विरक्तोत्पत्तिक्रियालक्षण | ०-११-० |
| संक्षिप्तविवाहविधि | ०- ३ ० |
| दशकर्मपद्धति | १- ४-० |
| तात्पर्यसंग्रह | ०- २-६ |
| गुरुशिष्यलक्षण | ०- ०-६ |
| ब्राह्मणवर्णन | ०- ०-३ |
| वीरशैवलिंगिब्राह्मणधर्मपर अभंग | ०- ०-६ |
| शैववीरशैवभेदाचारनिरूपण (सूक्ष्मागमपटल७) | ०- ०-९ |
| सूक्ष्मतंत्र पांचव्या पटलांतील गुरुशिष्यलक्षण | ०- १-० |
| सूक्ष्मतंत्र ६ व्या पटलांतील लिंगस्वरूपपूजाफलकथन | ० १-० |
| शिवचरित्र | ०- ७-० |

| | रु.आ.पै. | | रु.आ.पै. |
|---|---|---|---|
| वीरशैवांच्या धर्मसमजुतीस सरकारांतून मान | ०- २-० | सप्रयोग दत्तविधान ( पुत्रस्वीकारविधि ) | ०- २-० |
| उपन्यासविद्या ( कानडी ) | ०- ६-० | संक्षिप्तलिंगपूजाविधि | ०- ०-९ |
| अमरकोश प्रथमकांड | ०- १-६ | वेदांतसारवीरशैवचिंतामणि उत्तर भाग | २- ८-० |
| स्तोत्रसंग्रह ( संकृत ) | ०-१०-० | विवेकचिंतामणि पूर्व भाग | २- ८-० |
| रुद्रादिपंचक | ०- २-० | वीरशैवांची स्थिति | ०- ४-० |
| बिल्वोपनिषत् | ०- १-० | शैवरत्नाकर | १-१०-० |
| शिवाद्वैतमंजरी ( कानडी ) | ०- ६-० | शिवाद्वैतमंजरी ( संकृत ) | ०- ६-० |
| पादोदकविचार | ०- २-० | अनुभवसूत्र | ०- ७-० |
| वीरशैवशिवपूजाविधि | ०- ८-० | देविकालोत्तर | ०- १-६ |

**ग्रंथ मिळण्याचीं ठिकाणें:**—वरील ग्रंथ रा० रा० चनबसप्पा वारद यांचे मुंबई, विजापूर, सोलापूर, कलबुर्गा, पूर्णा येथील दुकानीं व बार्सी येथें नरसिंगगिरजी मिलचे दुकानीं विकत मिळतील.

आह्मी छापलेल्या धर्मग्रन्थांपैकीं कोणच्याही ग्रन्थाची दुसरी आवृत्ति काढण्याची कोणाची मर्जी असल्यास त्यांस आमची परवानगी आहे कारण धर्मग्रंथांचा जितका प्रसार होईल तितका व्हावा अशी आमची इच्छा आहे.

प्रसिद्धिकर्ता.

---

**छापत असलेले ग्रन्थ.**

१ शौचविधि. २ क्रियासार.



C. M. Veerabhadra Sharma.

